कम्बलार्धं तदर्धं वा तदर्धं वा प्रयत्नतः ।
कर्तव्यं श्रीमहेशाय तनुं प्राप्य द्विजैर्द्विज ।। 187

एवं यः कुरुते मर्त्यो महेशे घृतकम्बलम् ।
स सर्वपापनिर्मुक्तः शिवलोकं गमिष्यति ।। 188

यं यं कामयते कामं यः कृत्वा घृतकम्बलम् ।
तं तं काममवाप्नोति स मोक्षमधिगच्छति ।। 189

पुरा रेवानदीतीरे गौतमं मुनिपुङ्गवम् ।
दृष्ट्वा सुमेधाः पप्रच्छ प्रणम्य विनयान्वितः ।। 190

सुमेधाः (आह-)

गौतम श्रुतितत्वज्ञ वेदशास्त्रविशारद।
ऐश्वर्यमोक्षदं चैव वद धर्मं विशेषतः ।। 191

गौतमः (आह) -

शिवार्चनात्परो धर्मो नास्ति नास्ति जगत्त्रये ।
ऐश्वर्यदं तथा मोक्षप्रदं शङ्करपूजनम् ।। 192

महेशपूजनादन्यन्नास्त्येवैश्वर्यमुक्तिदम् ।
सत्यमेतत्पुनः सत्यमिति वेदा वदन्ति हि ।। 193

यमर्थं हृदि सङ्कल्प्य यः पूजयति शङ्करम् ।
स तमर्थमवाप्नोति सत्यं सत्यमिति श्रुतिः ॥ 194

शिवलिङ्गार्चनेनैव भुक्त्वा भोगाननेकधा ।
मुक्तिं च प्राप्नुवन्त्येव शिवार्चनपरायणाः ॥ 195

अखण्डमतुलं द्रव्यं यस्य यावदपेक्षितम् ।
ततोऽप्यधिकमैश्वर्यं प्राप्तव्यं शिवपूजया ॥ 196

माघे मासि महादेवे यः कुर्याद्घृतकम्बलम् ।
स भुक्त्वा सकलान्भोगानन्ते मोक्षं च विन्दति ॥ 197

नरा भूपतयो जाता घृतकम्बलदानतः ।
जातिस्मराश्च ते जाता मुक्ताश्चान्ते शिवार्चनात् ॥ 198

पुरा सुनागरं विप्रं जाबालश्रुतिपारगम् ।
पप्रच्छ गूढकर्माङ्गो धर्मं दारिद्र्यनाशकम् ॥ 199

**सुनागरः (उवाच) -**

असितायाः सितायाश्च धेनोर्घृतमनुत्तमम् ।
सम्पादनीयं यत्नेन घनीभूतं च शोधितम् ॥ 200

तद्घृतं तुलयोत्तीर्णं प्रस्थं सार्धशतत्रयम् ।
तदर्धं वा तदर्धं वा सायं नेयं शिवालये ॥ 201

घृतेनान्येन देवेशमभिषिच्य महेश्वर ।
घनीभूतं घृतं देयं ततः शङ्करमस्तके ॥ 202

ततस्तिलैः सर्षपैश्च बिल्वपत्रैश्च कोमलैः ।
हेमपद्मैश्च देवेशः पूजनीयो महेश्वरः ॥ 203

धूपदीपादिकं देयं ततो नैवेद्यमादरात् ।
ततो नीराजनं दत्वा देयः पुष्पाञ्जलिस्ततः ॥ 204

प्रदक्षिणनमस्कारान् कृत्वा च तदनन्तरम् ।
शैवं पञ्चाक्षरं जप्त्वा शिवायैतन्निवेदयेत् ॥ 205

ततो जागरण कार्यं शिवस्मरणपूर्वकम् ।
रात्रिर्नेया प्रयत्नेन महादेवकथादिभिः ॥ 206

ततः प्रातः समुत्थाय कृत्वा स्नानादिकं ततः ।
पूजनीयो महादेवो घृतसेचनपूर्वकम् ॥ 207

भोजनीयास्ततः शैवा भक्ष्यैर्भोज्यैश्च यत्नतः ।
ततः स्वयं च भोक्तव्यं बन्धुभिः सह सादरम् ॥ 208

अनेन तव दारिद्र्यं नाशमेष्यति सर्वथा ।
भोगांश्च विपुलान्भुक्त्वा शिवलोकं गमिष्यसि ॥ 209

गौतमः उवाच -

इत्युक्तस्तेन स शिवे चकार घृतकम्बलम् ।
ततः प्राप स चैश्वर्यमक्षीणवृद्धिसंयुतम् ।। 210

रत्नप्रासादसंयुक्ता गृहास्तेन विनिर्मिताः ।
वेदिकाः कारितास्तेन नवरत्नोज्ज्वलाः शुभाः ।। 211

निक्षेपा बहवो लब्धास्तेनेशस्य प्रसादतः ।
तस्य सार्धशतं पुत्रा बभूवुः शिवतत्पराः ।। 212

इदं सर्वं समालोक्य महदैश्वर्यमुत्कटम् ।
समस्तभोगसम्पन्नो हृष्टचित्तो बभूव सः ।। 213

स माघमासि यत्नेन सकुटुम्बो महेश्वरम् ।
नित्यं समर्चयामास साधनैर्विविधैरपि ।। 214

अधश्चकार धनदमैश्वर्येण सुखेन च ।
तेनैश्वर्येण सन्तुष्टो बभूव शिवतत्परः ।। 215

प्रतिसंवत्सरं चापि माघमासे स शाङ्करः ।
चकार पुत्रपौत्राद्यैः शम्भवे घृतकम्बलम् ।। 216

ततः प्रववृधे भूरि द्रव्यं मानातिगं पुनः ।
प्रासादः कारितस्तेन रत्नस्तम्भविराजितः ।। 217

तस्मिन् शिवालये तेन लिङ्गं रत्नमयं शुभम् ।
स्थापितं विधिवत्तत्र बहुद्रव्यव्ययान्मुदा ॥ 218

कृतानि तेन दानानि बहूनि शिवमन्दिरे ।
तदा सुवर्णदानानि गोदानानि च सादरम् ॥ 219

कृतानि शङ्करप्रीत्यैं शाङ्करेभ्यो विशेषतः ।
घृताक्तपरमान्नेन सम्पूज्य परमेश्वरम् ॥ 220

शर्करामधुदुग्धान्नैः पूजयामास शङ्करम् ।
अयुतं शिवभक्ताश्च भोजिताः प्रत्यहं मुदा ॥ 221

अतिथीन् पूजयामास भोजयामास चादरात् ।
कदाचित्तद्गृहं प्राप्ताः शैवाः सङ्ख्यातिगाः निशि ॥ 222

दृष्ट्वा तान् भस्मदिग्धाङ्गान् हृष्टचित्तो बभूव सः ।
ततस्तान्भोजयामास स्वाद्वन्नैर्घृतपाचितैः ॥ 223

ददौ स दक्षिणात्वेन रत्नानि च धनानि च ।
एवं भुक्त्वाऽखिलान्भोगान्कृत्वा च शिवपूजनम् ॥ 224

देहान्ते स शिवं प्राप घृतकम्बलसेवया ॥ 225

अगस्त्यः (उवाच) -

इत्युक्तः स सुमेधाश्च गौतमेन महात्मना ।
चकार माघे सम्प्राप्ते शिवाय घृतकम्बलम् ॥ 226

ऐश्वर्यं चापि सम्प्राप्य सर्वं शङ्करपूजया ।
भुक्त्वा च भोगान्सकलाञ्छिवसायुज्यमाप्य च ॥ 227

अतो यत्नेन कर्तव्यं महेशे घृतकम्बलम् ।
भोगान्मोक्षेच्छया विप्र सत्यं सत्यं न संशयः ॥ 228

मीनकर्कटयोर्मध्ये जलधारां महेश्वरे ।
यः कल्पयेदविच्छिन्नां स मोक्षमधिगच्छति ॥ 229

शिवं मकरसङ्क्रान्तौ दुग्धाद्यैः प्रस्थसम्मितैः ।
अभिषिच्य प्रयत्नेन शुद्धैरपि जलैर्नवैः ॥ 230

भस्म बिल्वादिभिः सम्यक् पूजयित्वा महेश्वरम् ।
सङ्कल्पपूर्वं यत्नेन नैवेद्यं तु प्रकल्पयेत् ॥ 231

शतप्रस्थमितैः कृष्णैः श्वेतैर्वा क्षालितैस्तिलैः ।
पूजनीयस्ततो भक्त्या लिङ्गरूपी सदाशिवः ॥ 232

सिंह्यादिष्वपि सङ्क्रान्तिष्वेवमेव सदाशिवः ।
पूजनीयो महादेवो विषुवेष्वयनेष्वपि । 233

युगादिष्वपि सम्पूज्यो मन्वादिष्वपि शङ्करः ।
एवमेव शिवः पूज्यो ग्रहणे चन्द्रसूर्ययोः ॥ 234

एवं यः कुरुते भक्त्या लिङ्गपूजां महेश्वरे ।
स महापातकेभ्योऽपि मुच्यते नात्र संशयः ॥ 235

तिलैः पूजां प्रयत्नेन स्वस्वाञ्जलिमितैः सदा ।
यः करोति स पापेभ्यः सर्वेभ्योऽपि विमुच्यते ।। 236

एवमेव महादेवं यो नित्यं श्वेतसर्षपैः ।
भक्त्या सम्पूजयेद्विप्रः स पापेभ्यो विमुच्यते ।। 237

निषधेषु पुरा कश्चिन्न्यवसद्ब्राह्मणाधमः ।
तेन पापान्यनन्तानि कृतानि ज्ञानतोऽन्वहम् ।। 238

तत्कृतानां हि पापानां प्रायश्चित्तं सुदुष्करम् ।
ब्रह्महत्यादिपापानि स व्यधान्नित्यकर्मवत् ।। 239

कदाचित्त्वथ धूर्तोऽसौ दृष्ट्वा राज्ञोऽतिसुन्दरीम् ।
युवतीं प्रियभार्यां च चकमे दैवयोगतः ।। 240

कयापि विधयाप्येनां रन्तुमैच्छत्सुदुर्मनाः ।
अथैकदा ययौ राज्ञो मन्दिरं स धनुर्धरः ।। 241

अथ राज्ञः प्रियां भार्यां नवयौवनदर्पिताम् ।
वलाद्ग्रहीतुमुद्युक्तो राज्ञा दृष्टस्ततः परम् ।। 242

ततः स भीतो वेगेन प्रपलाय्य गतो बहिः ।
राजापि कुपितः शस्त्रं गृहीत्वाऽन्वगमद्द्रुतम् ।। 243

अथ राजभटैः सद्यो गृहीतोऽसौ द्विजाधमः ।
भूपालमब्रवींद्विप्रो रोषप्रस्फुरिताधरम् ।। 244

राजन् कृतापराधोऽस्मि हर मां दुष्टचेतसम् ।
"हर मामि"ति यः शब्दस्तदुक्तस्तं नृपस्तदा ।। 245

श्रुत्वा बभूव तत्काले रोमाञ्चाङ्कितविग्रहः ।
ततः शस्त्रं नृपस्त्यक्त्वा स्वहृद्येवमचिन्तयत् ।। 246

अयं धन्यो न हन्तव्यः सर्वथा पुण्यसंश्रयः ।
हर मामिति यः शब्दो निः सृतोऽस्त मुखाच्छ्रुतः ।। 247

सर्वपापहरः पुण्यो भुक्तिमुक्तिफलप्रदः ।
रात्रौ तामसकालेऽस्मिन्हरशब्दो हरात्मकः ।। 248

श्रावितोऽहमनेनाद्य बलादघविनाशकः ।
अयं हरपरो नूनं जन्मजन्मान्तरे नरः ।। 249

अन्यथा हर इत्येवं कथं वा श्रावयिष्यति ।
अनेनास्यां महारात्रौ उपकारः कृतो महान् ।। 250

एतत्तुल्योपकारोऽस्मै कः कर्तव्यो मयाधुना ।

**अगस्त्यः (उवाच) -**

इति सञ्चिन्त्य नृपतिस्तस्मै नत्वा ततः परम् ।। 251

मा भैषीरिति तं प्राह गृहीत्वा हस्तमादरात् ।
ततस्तमब्रवीद्राजा तुभ्यमिष्टं स्वशक्तितः ।। 252

दास्ये ममैव निकटे संवसस्वेति सादरम् ।
राजा शिवकथालापैर्नीत्वा रात्रिं ततः परम् ॥ 253

धनं धान्यं च रत्नानि ददौ तस्मै यथेच्छया ।
ततः स विप्रो लब्धश्रीः सदा राज्ञा सह स्थितः ॥ 254

शुश्राव धर्मानखिलान् राज्ञा च सह सन्ततम् ।
श्रुत्वा धर्मानशेषेण स विप्रो धर्मतत्परः ॥ 255

ततः सर्वं परित्यज्य शिवपूजापरोऽभवत् ।
भूपालस्तं द्विजं दृष्ट्वा शिवपूजापरायणम् ॥ 256

सन्तोषं परमं प्राप विस्मितश्च द्विजोत्तमः ।
कारयामास नृपतिर्मुक्ताप्रासादमुत्तमम् ॥ 257

ततः स कारयामास हेमप्रासादमुत्तमम् ।
ततः संस्थापयामास तत्र लिङ्गं शिवात्मकम् ॥ 258

कोटिशो दीपदानानि स चकार शिवालये ।
रत्ननिर्मितपात्रेषु गोघृतेनैव सादरम् ॥ 259

दीपस्तम्भान्सुवर्णेन कारयामास कोटिशः ।
तेषु संस्थापयामास दीपपात्राणि कोटिशः ॥ 260

कारयामास नृपतिः नानापुष्पवनं मुदा ।
कारयामास यत्नेन नृपो बिल्ववनान्यपि ॥ 261

एतादृशं नृपं दृष्ट्वा स विप्रोऽपि प्रयत्नतः ।
शिवालयं सुवर्णेन कारयामास सादरम् ॥ 262

तत्र लिङ्गप्रतिष्ठां च चकार विधिपूर्वकम् ।
ततः परं मृतो विप्रः शिवरूपमवाप सः ॥ 263

स राजा देवदेवेशं पूर्वजन्मनि शङ्करम् ।
पूजयामास यत्नेन तेनैश्वर्यमवाप सः ॥ 264

भक्तिं च परमां प्राप तयैव शिवपूजया ।
तयैव भक्त्या सततं शिवपूजापरायणः ॥ 265

चकार परया भक्त्या सर्वान् शिवरतान् द्विजान् ।
शिवलिङ्गैकनिरताननन्यशरणानपि ॥ 266

तद्राजवशगो लोको यावानासीद्द्विजोत्तम ।
स तत्र कारयामास प्रतिग्रामे शिवालयम् ॥ 267

शिवस्थानविहीनेभ्यो देशेभ्यः करमागतम् ।
स न जग्राह भूपालः शत्रुबृन्दनिबर्हणः ॥ 268

गृहीत्वा परराष्ट्रं च हत्वा शत्रून् नृपो बली ।
तद्राष्ट्रे कारयामास शिवस्थानानि कोटिशः ॥ 269

एवं धर्मरतो राजा शिवपूजनपूर्वकम् ।
करोति सततं विप्र राष्ट्रस्य परिपालनम् ॥ 270

तस्य भूपस्य पुत्राश्च गुणवन्तः सुधार्मिकाः ।
शूराश्च कृतविद्याश्च शिवपूजापरायणाः ॥ 271

तेषु पुत्रेषु भूपालो राष्ट्रं विन्यस्य सादरम् ।
स्वयं शिवमवापान्ते शिवध्यानपरायणः ॥ 272

अतः शिवपरा धन्याः पुण्याः पूज्याश्च सादरम् ।
निर्जिताघा निरातङ्का निःशङ्काः शमनादपि ॥ 273

कश्चिद्भिल्लाधमः पूर्वं न्यवसद्विपिनान्तरे ।
तेनारण्ये स्ववासार्थमेका पर्णकुटी कृता ॥ 274

तत्पर्णशालानिकटे नार्मदं लिङ्गमुत्तमम् ।
स्थितमुष्णेन सन्तप्तं पक्वजम्बूफलाकृति ॥ 275

कदाचित्तेन सन्दृष्टं तल्लिङ्गं शङ्करात्मकम् ।
दृष्ट्वा पर्णकुटीमध्ये स्थापितं तेन तत्ततः ॥ 276

संस्थाप्य तन्महालिङ्गं हन्म्यनेन नरानिति ।
सन्तोषं परमं प्राप भिल्लः पथिकघातकः ॥ 277

स पातयित्वा पथिकान्स्वपर्णगृहसन्निधौ ।
तेषां शिरांसि लिङ्गेन पातयामास तेन वै ॥ 278

तेन लिङ्गेन निहता यावन्तो निर्गतासवः ।
तावन्तोऽपि शिवं प्रापुर्लिङ्गस्पर्शवशाज्जनाः ॥ 279

ततः स नार्मदं लिङ्गं नररक्तसमावृतम् ।
प्रक्षाल्य पर्णसदने स्थापयामास वै पुनः ।। 280

तल्लिङ्गं कश्चिदागत्य नेष्यतीति भिया सदा ।
सपत्रबिल्वशाखाभिः स समाच्छाद्य संस्थितः ।। 281

स तत्र बिल्वपत्रैस्तल्लिङ्गमाच्छदयंस्थितः ।
लिङ्गे निपात्य बहवो विप्रास्तेन हताः पुरा ।। 282

कदाचिदागतोऽन्यश्च विप्रः पातकसंश्रयः ।
सोऽपि तेनैव लिङ्गेन निहतः स्वतनुं जहौ ।। 283

ततो नीतः स पापिष्ठो यमदूतैर्भयानकैः ।
तमानीतं द्विजं दृष्ट्वा चित्रगुप्तं यमोऽब्रवीत् ।। 284

यम (उवाच) -

किमनेन कृतं पापं पुण्यं वा कोऽयमीदृशः ।
पुण्यवान् पातकी वेति वद सत्वरमादरात् ।। 285

चित्रगुप्तः (उवाच) –

एतत्कृतानि पापानि ह्यसंख्यातानि धर्मराट् ।
पापैरेव दिनान्यस्य गतानि बहुधा यम ।। 286

ब्रह्महत्यादिकं कृत्वा प्रत्यहं प्रीतिपूर्वकम् ।
तल्लिङ्गस्पर्शमात्रेण दग्धपापा भवन्त्यतः ।। 287

अयं निष्पाप एवासीन्नास्य यामीययातना ।
ये त्यजन्ति तनुं धीरा नर्मदालिङ्गसन्निधौ ।। 288

ते सर्वेऽपि भवन्त्येव मुक्ता नास्त्यत्र संशयः ।
यस्य कस्यापि वा कायः शिवलिङ्गस्य सन्निधौ ।। 289

त्यक्तप्राणो भवेत्कश्चित्स जीवो याति शङ्करम् ।
लिङ्गस्य सन्निधौ येन लिङ्गस्पर्शपुरःसरम् ।। 290

त्यक्तं शरीरं तेनाशु शिवः आसाद्यते ध्रुवम् ।
नर्मदालिङ्गनिकटे हृता ये तरवोऽपि ते ।। 291

प्रयान्ति शिवसायुज्यं किमन्ये मनुजादयः ।
कीटादयस्तनुं त्यक्त्वा नर्मदालिङ्गसन्निधौ ।। 292

बहवो मोक्षमापन्नास्तेषां सङ्ख्या न विद्यते ।
येनार्चितं बिल्वपत्रैर्नर्मदालिङ्गमुत्तमम् ।। 293

तेनार्चितानि लिङ्गानि सार्धकोटिशतत्रयम् ।
येन सम्पूज्यते नित्यं नर्मदालिङ्गमुत्तमम् ।। 294

न तत्कुलप्रसूतानां वसतिर्नरकालये ।
सद्यो नश्यन्ति पापानि नर्मदालिङ्गदर्शनात् ।। 295

स्पर्शनार्चनपूजाद्यैर्मोक्ष एव भवेन्नृणाम् ।
हत्वापि कोटिशो विप्रान्वेदवेदाङ्गपारगान् ॥ 296

यः पश्येन्नर्मदालिङ्गं स पापेभ्यो विमुच्यते ।
यः पूजयेद्बिल्वपत्रैर्नार्मदं लिङ्गमुत्तमम् ॥ 297

स सद्यो मुच्यते पापैः कोटिजन्मकृतैरपि ।
अमितानि विचित्राणि पातकानि नवान्यपि ॥
सद्य एव विनश्यन्ति नर्मदालिङ्गपूजया ॥ 298

अगस्त्यः (उवाच) -

इति तद्वचनं श्रुत्वा यमः सन्तुष्टमानसः ।
पूजयामास तं विप्रमुपवेश्य निजासने ॥ 299

तदानीमेव सहसा सोत्साहं शिवकिङ्कराः ।
समागताः साट्टहासं ददर्श च स तान्यमः ॥ 300

दृष्ट्वा तान् सत्वरं कालो रत्नसिंहासनेषु तान् ।
उपवेश्य यथाशक्ति पूजयामास सादरम् ॥ 301

ततस्ते यममालोक्य विनयानतकन्धरम् ।
प्रोचुर्यमहितं वाक्यमुत्फुल्लवदनास्तदा ॥ 302

शिवकिङ्करा ऊचुः -

ये समर्चितगौरीशास्ते यान्ति शिवसन्निधिम् ।
येऽनभ्यर्चितगौरीशा निरये तान्निपातय ॥ 303

इत्याज्ञप्य यमं नम्रं सर्वेऽपि शिवकिङ्कराः ।
ययुः कैलासनिलयं तं गृहीत्वैव सत्वरम् ॥ 304

गाणपत्यं ददौ तस्मै महेशः करुणानिधिः ।
स तिष्ठति गणेष्वेव शिवसेवापरः सदा ॥ 305

अतस्तनुक्षये स्पृष्टं शिवलिङ्गं द्विजोत्तमैः ।
तैरीशकृपया लभ्यं गाणपत्यं न संशयः ॥ 306

कर्तव्यः शिवलिङ्गस्य स्पर्शः प्राणात्ययक्षणे ।
तेन नश्यन्ति पापानि गाणपत्यं च लभ्यते ॥ 307

शिवलिङ्गं शिवाकारं यः स्पृशेदन्वहं मुदा ।
तस्य सद्यः प्रणश्यन्ति महापातककोटयः ॥ 308

दुर्लभः शिवलिङ्गस्य स्पर्शो मुक्तिप्रदायकः ।
शिवलिङ्गाभिसंस्पर्शो भूरिपुण्यतपःफलम् ॥ 309

शिवलिङ्गस्य माहात्म्यं तत्स्पर्शस्यापि वस्तुतः ।
शङ्करो वेद सर्वज्ञस्तदन्यो न कदाचन ॥ 310

शिवलिङ्गं शिवाकारं सर्ववेदान्तसंस्तुतम् ।
तदेव परमं पूज्यं ब्राह्मणाद्यैर्मुमुक्षुभिः ॥ 311

ज्ञानमोक्षप्रदं दिव्यं शिवलिङ्गं शिवात्मकम् ।
तेन भिल्लेन सततं स्पृष्ट्वा सपृष्ट्वा स्थितं द्विज ॥ 312

कदाचित्त्वथ भिल्लोऽसौ वेदमार्गपरान् द्विजान् ।
दृष्ट्वा तुष्टान्तरङ्गोऽभूत्तरुगुल्मावृते वने ॥ 313

अथ तानखिलान्भिल्लः पातयित्वाऽवनीतले ।
तेनैव शिवलिङ्गेन चूर्णयामास सत्वरम् ॥ 314

ततः स बिल्वशाखाग्रैर्नवपल्लवसंयुतैः ।
लिङ्गमाच्छादयामास प्रक्षाल्य विमलैर्जलैः ॥ 315

तदानीमागताः केचित्प्रबलाः शस्त्रपाणयः ।
सन्नद्धाः प्रबलाः क्रूरा धनुर्विद्याविशारदाः ॥ 316

धनुष्यारोप्य तदनु स्थिताश्चित्रार्पिता इव ।
ततः समागता वीराः सहस्रं शस्त्रपाणयः ॥ 317

तेऽपि हन्तुं समुद्युक्ताः स्थिताश्चित्रार्पिता इव ।
दृष्ट्वा तानात्तभीर्भिल्लः परमाश्चर्यसम्युतः ॥ 318

स्वयं विचारयामास किमेतेषामभूदिति ।
ततो विचार्य तानाह सुदृढश्च धनुर्धरान् ॥ 319

किमर्थं स्थीयते वीराः किमासीत्तद्वदन्त्विवति ।। 320

भटाः (ऊचुः) -

भवन्तं हन्तुमुद्युक्ताः सर्वे वयमुदायुधाः ।
कुण्ठिताथाभवच्छक्तिस्त्वय्यस्माकमिहाऽधुना ।। 321

कुतः समागता भिल्ल शक्तिरस्मन्निरोधने ।
मनुष्येष्वीदृशी शक्तिर्न भविष्यति सर्वथा ।। 322

भवानतो न भिल्लोऽस्ति भगवांस्त्वं न संशयः ।
धनुर्धराणामस्माकं शक्तिरद्यैव कुण्ठिता ।। 323

हेलया जितवैकुण्ठा वयं विख्यातपौरुषाः ।
इन्द्रः पराजितोऽस्माभिर्गन्धर्वाश्च पराजिताः ।। 324

धीरा वयं धनुःशास्त्रे प्रवीणा नात्र संशयः ।
वयं रुद्रार्चका नित्यं रुद्रदत्तपराक्रमाः ।। 325

सत्यलोकादिलोकेषु सञ्चारोऽप्यस्ति नो ध्रुवम् ।
भवान्भाग्यवशादद्य दृष्टोऽस्माभिर्भवापहः ।। 326

भगनेत्रभिदीशानो भवानेवेति मन्महे ।
नानारूपाणि धृत्वैवं विहारः क्रियते त्वया ।। 327

शः

अगस्त्यः

तदेव (आह) -

इयुक्त्वा ते भटाः सर्वे त्यक्त्वा शस्त्राणि सत्वरम् ।
भिल्लमभ्यर्चयामासुः शिवबुध्या तमेव ते ।। 328

ततः प्रणम्य ते सर्वे पतित्वा पृथिवीतले ।
शम्भो शिवशिवेत्येवं स्तोतुमारेभिरे मुदा ।। 329

तदानीं श्रीमहादेवः सन्तुष्टो गणसेवितः ।
प्रादुरासीद्वृषारूढो भगवान्भक्तवत्सलः ।। 330

ततस्तं देवदेवेशमुमालिङ्गितविग्रहम् ।
दृष्ट्वा प्रहृष्टास्ते सर्वे तुष्टुवुर्विनयान्विताः ।। 331

नमस्ते पार्वतीनाथ करुणाकर शङ्कर ।
नमस्ते देवदेवेश भगवन्भक्तवत्सल ।। 332

नमस्ते विश्ववन्द्येश मधुसूदनपूजित ।
नमस्ते सोमसूर्याग्निनयनामितविक्रम ।। 333

नमस्ते विमलाकार निराकार महेश्वर ।
नमस्ते निर्गुणानन्द भक्तानन्दप्रदायक ।। 334

नमस्ते जगदाधार निराधार महेश्वर ।
नमस्ते ब्रह्मविष्णवादिदेवाराध्याध्वरप्रिय ।। 335

नमस्ते चन्द्रचूडेश चन्द्रवर्णमितप्रभ ।
नमस्ते मन्मथाराते दक्षाध्वरविनाशक ।। 336

नमस्ते वेदवेदान्तप्रतिपादितवैभव ।
नमस्ते गिरिजाबन्धो दयासिन्धो बुधोत्तम ।। 337

नमस्ते भूतिमद्बन्धो भूतिभूषण भूतिद ।
नमस्ते सर्ववेदेड्य सर्वदेवनमस्कृत ।। 338

नमस्ते सर्वभूतेश सर्वभूतनमस्कृत ।
नमस्ते सर्वभूतादिसृष्टिस्थित्यन्तकारण ।। 339

अगस्त्यः (उवाच) -

इति स्तुत्वाऽथ ते सर्वे बिल्वपत्रैर्महेश्वरम् ।
सम्पूज्य भक्तिभावेन प्रणेमुस्ते पुनः पुनः ।। 340

ततस्तानाह भगवान्भक्तिभावनतान्भटान् ।
आनन्दामृतवर्षिण्या मधुरश्लक्ष्णया गिरा ।। 341

महादेवः (उवाच) -

भुवि भुक्त्वाऽखिलान्भोगान् मां प्रयान्तु ततः परम् ।
तावद्यत्नेन मां नित्यमर्चयध्वमतन्द्रिताः ।। 342

भिल्लोऽयमपि निष्पापो मामेष्यत्येव सर्वथा ।
एतेऽप्येतद्व्रताः विप्रा मामेष्यन्ति न संशयः ।। 343

अनेन नार्मदं लिङ्गं बिल्वशाखावृतं कृतम् ।
प्रक्षाल्य तज्जलैः शुद्धैः स्थापितं च निजालये ।। 344

अनेन धर्मसन्तप्तं नार्मदं लिङ्गमुत्तमम् ।
निजपर्णकुटीमध्ये स्थापितं यत्नपूर्वकम् ।। 345

अयं तु नार्मदं लिङ्गं स्पृशत्यन्वहमादरात् ।
शिवलिङ्गार्चनफलं प्रदर्शयितुमादरात् ।। 346

कृतं मयाद्य वीराणां भवतां शक्तिकुण्ठनम् ।
मत्तः समम्प्राप्तवीर्याणां भवतामपि दुःसहा ।। 347

शक्तिरस्मिन्कुण्ठितैव मल्लिङ्गार्चनतत्परे ।
मदर्चनपरे मर्त्ये यादृशे तादृशेऽपि वा ।। 348

पराक्रमोऽतिनाक्रामेद् ध्रुवमेतद्ध्रुवं ध्रुवम् ।
छायायां स्थापयेद्यस्तु शिवलिङ्गं मदात्मकम् ।। 349

स मामेष्यत्यसन्दिग्धं सन्दग्धाखिलपातकः ।
तृणपर्णमये गेहे दारुग्रावमयेऽपि वा ।। 350

शिवलिङ्गं प्रतिष्ठाप्य मुच्यते सर्वकिल्बिषैः ।
शिवलिङ्गं प्रतिष्ठाप्य ब्रह्मत्वं योऽभिवाञ्छति ।। 351

दास्यामि तस्मै ब्रह्मत्वमन्ते मोक्षं च विन्दति ।
शिवलिङ्गं प्रतिष्ठाप्य विष्णुत्वं योऽभिवाञ्छति ॥ 352

तस्मै दास्यामि विष्णुत्वमन्ते मोक्षं च विन्दति ।
शिवलिङ्गं प्रतिष्ठाप्य काष्ठग्रावादिमन्दिरे ॥ 353

सर्वान्कामानवाप्नोति मयि संप्रविशन्ति च ॥ 354

अगस्त्यः आह -

इत्युक्त्वा पार्वतीनाथः सर्वदेवशिखामणिः ।
सगणः सत्वर साम्बस्तत्रैवान्तरधीयत ॥ 355

एतादृशो मुक्तिदाता शङ्करः करुणाकरः ।
पूजनीयः प्रयत्नेन ध्यातव्यश्च मुमुक्षुभिः ॥ 356

संसारसर्पदष्टानां शिपिविष्टार्चनं फलम् ।
सञ्जीविनी तदन्यत्तु नैव सञ्जीविनी ध्रुवम् ॥ 357

यः कुर्यात्कृतपापोऽपि महादेवार्चनं मुदा ।
स सर्वेभ्योऽपि पापोभ्यो मुक्तो मुक्तिं च विन्दति ॥ 358

तेषां न नरकाद्भीतिः संसारादपि सर्वथा ।
येषामस्ति महादेवे भक्तिरव्यभिचारिणी ॥ 359

शिवभक्तिः स्वयं साक्षाद्भुक्तिदा परमुक्तिदा ।
सा भक्तिर्भूरितपसा धन्यानां भवति द्विज ॥ 360

शिवार्चनात्परो धर्मो नास्ति न श्रूयतेऽपि वा ।
सत्यमेतत्पुनः सत्यं सत्यमेतन्न संशयः ।। 361

भजनीयो महादेवो जपनीयः षडक्षरः ।
स्मरणीयः शिवानाथः पूजनीयश्च शङ्करः ।। 362

पुरा ब्रह्मादयो देवा हिमवत्पर्वताश्रयाः ।
सम्पूज्य देवदेवेशं केदारेशमुपाश्रिताः ।। 363

तदानीमागतो विष्णुः शिवयात्रापरायणः ।
आगत्य पूजयामास केदारेशमुमापतिम् ।। 364

ततस्तुष्टाव गिरिशं रुद्रं मन्त्रैरनेकधा ।
ततः प्रदक्षिणीकृत्य प्रणामांश्च चकार सः ।। 365

मनुं जजाप हृष्टात्मा शैवं पञ्चाक्षरं मुदा ।
ततः परं महारुद्रं जजाप स हरिर्द्विज । 366

ब्रह्माद्यास्तं हरिं दृष्ट्वा शिवपूजापरायणम् ।
प्रणम्य दण्डवद्भूमौ पप्रच्छुर्धर्मसंहिताम् ।। 367

देवा ऊचुः -

विष्णो वेदार्थतत्वज्ञ शिवपूजापरायण ।
किं ध्येयं किं परं ब्रह्म वद निश्चित्य सादरम् ।। 368

अगस्त्य उवाच -

इति तद्वचनं श्रुत्वा विष्णुर्हृष्टः कृताञ्जलिः ।
प्रणम्य शिरसा शम्भुमुवाच द्विजसत्तम ।। 369

विष्णुः (उवाच) -

ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ।
ऊर्ध्वरेतं विरूपाक्षं विश्वरूपं भजाम्यहम् ।। 370

शिव एव परं ब्रह्म सच्चिदानन्दविग्रहम् ।
निलिप्तो (निर्मलो) निर्गुणो नित्यस्तुरीयः शिव उच्यते ।।

सच्चिद्घनो निराकारो निर्द्वन्द्वः स निरामयः ।
सृजत्यवत्यत्यस्मान्स भवाजत्वाद्युपाधिभिः ।। 372

अदृष्टेनास्मदादीनां तस्येच्छैव प्रजायते ।
भवत्वोपाधिमाश्रित्य सृजत्येतज्जगच्छिवः ।। 373

लीलयैव सृजत्यस्मानायासोऽस्य न कश्चन ।
मृडत्वोपाधिमाश्रित्य पाति सर्वमुमापतिः ।। 374

लीलयैवावतः सर्वं तस्यायासो न कश्चन ।
हरत्वोपाधिमाश्रित्य स हन्त्यस्मान्पिनाकभृत् ।। 375

स हन्त्यस्माँल्लीलयैव तस्यायासो न कश्चन ।
शिवस्य वस्तुतः कृत्यं तस्य नास्त्येव सर्वथा ।। 376

तथापि लीलयैवास्मान् सृजत्यवति हन्ति च ।
स्वतन्त्रस्य महेशस्य सर्वज्ञस्यामितात्मनः ।। 377

सृष्ट्यादावितरापेक्षा नास्ति सर्वात्मना सुराः ।
स तुरीयोऽस्मदादीनां न प्रत्यक्षः कदाचन ।। 378

परन्तु वेदवेदान्तैस्तद्रूपमवगम्यते ।
श्रुतिस्मृतिपुराणाद्यैः शिवोऽस्तीत्युच्यते ततः ।। 379

श्रुत्याद्युक्तप्रकारेण स सेव्यः सर्वसाधनैः ।
सततं यैस्तपस्तप्तं बहुधा बहुसाधनैः ।। 380

तेषामेव शिवे भक्तिः श्रद्धा चैवोपजायते ।
अनन्तमव्ययं शान्तं शिवमक्षरमद्वयम् ।। 381

अविज्ञायान्यथा ज्ञात्वा भवन्त्यत्यन्तदुःखिताः ।
शिवो हि निर्गुणोऽनन्तस्तुरीय इति धीरपि ।। 382

सहसा न भवत्येव संसाराविष्टचेतसाम् ।
येषां न विषयासक्तिर्ये च निर्दग्धकल्मषाः ।। 383

तेषामेव शिवे भक्तिः श्रद्धा चैवोपजायते ।
धर्मास्तपांसि दानानि यागाश्च विविधाः सुराः ।। 384

शिवे प्रामाण्यबुद्धिं च जनयन्ति न संशयः ।। 385

विश्वं च भुवनं चित्ते त-
ज्जातं भूयो जायमानं च भूयः ।
एतत्सर्वं रुद्र एवेति मत्वा
भूयो भूयः पूज्यमानो (पूजनीयो) महेशः ॥ 386

सर्वं रुद्रं मत्वा सर्वभावेन सर्वं
सर्वाशास्यं निर्गुणं निष्कलं च ।
ससेवन्ते साधवः सर्वथा नो
भूयो भूयः पूजनीयो महेशः ॥ 387

रुद्रः सर्वं रुद्र एकत्वमाहुः
एको रुद्रो न द्वितीयाय तस्थे ।
नेशादन्यत्किञ्चिदस्तीति नित्यं
भूयोभूयः पूजनीयों महेशः ॥ 388

यं वेदान्ता नैव जानन्ति सिद्धा
यं योगीन्द्रा नैव जानन्ति विप्राः ।
तं चिद्रूपं ज्ञातुमिच्छत्यतो वा
यो यं ज्ञात्वैवामृतत्वं प्रयाति ॥ 389

यो निर्लिप्तो निर्गुणोऽपि त्रिणेत्रो
यो निर्बाहुः स्वर्णबाहुः स्वतन्त्रः ।

यो नीरूपः स्वर्णरूपः स एव
भूयो भूयः पूजनीयो महेशः ।। 390

निर्गुणोऽपि स्वर्णवर्णो य आसी-
द्योवाऽरूपोऽप्यम्बिकानाथ आसीत् ।
देवाधीशः सोऽयमज्ञेयतत्वो
भूयो भूयः पूजनीयो महेशः ।। 391

यस्येच्छातोऽस्माकमुत्पत्तिरासो-
द्यस्येच्छातो जायते रक्षणं च ।
यस्येच्छातो भाविनाशः स नित्यो
भूयोभूयः पूजनीयो महेशः ।। 392

यस्माद्भीतो वाति बायुः सदायं
यस्माद्भीतो (त्यो)देति सूर्योऽपि नित्यम् ।
यस्माद्भीतो (वह्निमुख्या) वीतिहोत्रेन्द्रमुख्या
भूयो भूयः पूजनीयो महेशः ।। 393

यस्यार्चातो लभ्यते सर्वपृथ्वी
यस्यार्चातो लभ्यते मोक्षलक्ष्मीः ।
यस्यार्चातोऽनेकधर्माद्यसिद्धिः
सोऽयं शम्भुः पूजनीयोऽनिशं च ।। 394

पुरा रेवातटे कश्चिद्ब्राह्मणो ब्रह्मवित्तमः ।
वहुकालं ततः शम्भुं लिङ्गरूपिणमार्चयत् ।। 395

तत्र कश्चिन्महापापी तं दृष्ट्वा द्विजसत्तमम् ।
प्रणम्य दण्डवद्भूमौ कृताञ्जलिरभाषत ।। 396

शिवार्चनपर श्रीमन् श्रीमहापापनाशक ।
मया कृतानि पापानि ज्ञात्वापि प्रतिवासरम् ।। 397
(वदोपायं कृपासिन्धो पापनिर्वापणक्षमम्)

द्विजः (उवाच) -

त्वयाद्य नर्मदा दृष्टा शिवलिङ्गसमाश्रिता ।
तव पापानि नष्टानि रेवादर्शनमात्रतः ।। 398

येनैकमपि दृष्टं स्यात् शिवलिङ्गं शिवात्मकम् ।
तस्याप्येनांसि नश्यन्ति विविधान्यपि तत्क्षणे ।। 399

शिवलिङ्गान्यमेयानि रेवायां सन्ति सर्वतः ।
एतेषां दर्शने प्राप्ते विनश्यन्त्यघकोटयः ।। 400

वस्तुतः शिवलिङ्गस्य स्मरणेनापि सत्वरम् ।
पातकानि विनश्यन्ति विचित्राण्यमितानि च ।। 401

शिवलिङ्गप्रदेशोत्थवायुस्पर्शोऽपि तत्क्षणे ।
विनाशयति पापानि घोराणि विविधान्यपि ॥ 402

शिवलिङ्गाश्रितं देशं यः प्राप्तुं यतते यदा ।
तदैवाखिलपापानि नश्यन्त्यस्ति हि सा श्रुतिः ॥ 403

अस्माकं शिवभक्तानां श्रुतिप्रमाण्यवादिनाम् ।
धर्माधर्मविचारार्थं श्रुतिरेवावलम्बनम् ॥ 404

शिवोक्ताः श्रुतयोऽस्माभिः शिवभक्तैः समादृताः ।
शिवलिङ्गानि दृष्टानि सायमद्य त्वयाधुना ॥ 405

अतः तव पातकानि न स्थास्यन्ति त्वयि ध्रुवम् ।
यानि पापान्यनन्तानि प्रतिजन्मार्जितान्यपि ॥ 406

तानि सद्यो विनश्यन्ति सायं शङ्करदर्शनात् ।
सायङ्काले मनुष्याणां दुर्लभं शिवदर्शनम् ॥ 407

महेशदर्शनं सायं देवानामपि दुर्लभम् ।
यस्मिन्कृपा महेशस्य पूर्णा तिष्ठति सर्वदा ॥ 408

तस्य सायं महेशस्य दर्शनं भवति ध्रुवम् ।
सर्वथा हतभाग्यानां पुरुषाणां दुरात्मनाम् ॥ 409

(शिवस्य दर्शनं सायं प्रदोषे दुर्लभं ध्रुवम्)
सायं दृष्ट्वा महादेवं यः पूजयति सादरम् ॥ 410

स सर्वपापनिर्मुक्तः शिवसायुज्यमेष्यति ।
प्रातर्मध्याह्नतः सायं निशि वा योऽर्चयेच्छिवम् ॥ 411

स जन्मकोटिपापेभ्यः सद्यो मुच्येत सर्वथा ।
तावत्पापानि तिष्ठन्ति न यावच्छिवमर्चयेत् ॥ 412

पापक्षयो भाग्यवृद्धिरायुर्वृद्धिः क्षणे क्षणे ।
भवत्यवश्यं मर्त्यानां श्रीमहादेवपूजया ॥ 413

आयुरारोग्यमैश्वर्यं तत्वज्ञानमनामयम् ।
भवत्यवश्यं मर्त्यानां श्रीमहादेवपूजया ॥ 414

शत्रुनाशो दुःखनाशो मोहनाशश्च सर्वथा ।
भवत्यवश्यं मर्त्यानां श्रीमहादेवपूजया ॥ 415

विद्यावृद्धिः पुत्रवृद्धिर्वंशवृद्धिस्तथैव च ।
भवत्यवश्यं मर्त्यानां श्रीमहादेवपूजया ॥ 416

शिवलिङ्गार्चकासाध्यं न किञ्चिदपि सर्वथा ।
यत्प्रसादांशलेशस्य लेशेनापि जनार्दनः ॥ 417

वैकुण्ठं प्राप शत्रूंश्च जघानार्च्यैव शङ्करम् ।
यतन्ते यत्प्रसादार्थं विष्णुब्रह्मादयः सुराः ॥ 418

स सर्वदा पूजनीयो देवदेवोत्तमः शिवः ।
यः कालकालः सर्वज्ञः सर्ववन्द्यो महेश्वरः ॥ 419

स सर्वदा .... .... ।

येनेदं सृष्टमखिलं जगत्स्थावरजङ्गमम् ॥ 420

स सर्वदा .... .... ।

येन संपाल्यते नित्यं सर्वमेतच्चराचरम् ॥ 421

स सर्वदा .... .... ।

येनेदं विश्वमखिलं भस्मसात्क्रियते क्षणात् ॥ 422

स सर्वदा .... .... ।

यः पूर्णः सच्चिदानन्दः सर्वव्यापी विभुः प्रभुः ॥ 423

स सर्वदा .... .... ।

यो निर्गुणोऽपि सगुणः परमानन्दविग्रहः ॥ 424

स सर्वदा .... .... ।

यन्नामश्रवणादेव भुक्तिर्मुक्तिश्च जायते ॥ 425

स सर्वदा .... .... ।

यत्कथाश्रवणात्सद्यो दग्धाः संसारवासनाः ॥ 426

स सर्वदा .... .... ।

यमर्चयन्ति मुनयो हृत्पङ्कजनिवासिनम् ॥ 427

स सर्वदा .... .... ।

यदर्चनेन सर्वैश्च गाणपत्यमवाप्यते ॥ 428

स सर्वदा .... .... ।
यद्वामाङ्गादभूद्विष्णुर्दक्षिणाङ्गात्प्रजापतिः ।। 429

स सर्वदा .... .... ।
यमाहुर्निष्कलं शान्तं निरवद्यं निरञ्जनम् ।। 430

स सर्वदा .... .... ।
यमाहुः पुरुषं शान्तं नीलग्रीवं पिनाकिनम् ।। 431

स सर्वदा .... .... ।
यमाहुः श्रीविरूपाक्षमुमादेहार्धधारिणम् ।। 432

स सर्वदा .... .... ।
यमाहुः करुणासिन्धुं भक्तबन्धुमुमापतिम् ।। 433

स सर्वदा .... .... ।
यं विदित्वाऽमृतीभूय न पुनर्गर्भभाङ्नरः ।। 434

स सर्वदा पूजनीयो देवदेवोत्तमः शिवः ।। 435

विष्णुरुवाच -

इति तद्वचनं श्रुत्वा स सद्यो मुक्तपातकः ।
तत्रैव नर्मदातीरे शिवार्चनपरोऽभवत् ।। 436

ततः परं स मुक्तोऽभूच्छिवलिङ्गसमर्चनात् ।
तस्मान्मुमुक्षुभिर्नित्यं पूजनीयः सदाशिवः ।। 437

अत्र कश्चित्पुरा विप्रः शिवपूजापरः स्थितः ।
स सर्वदा भस्मनिष्ठः सदा रुद्राक्षभूषणः ।। 438

पञ्चाक्षरपरो नित्यं रुद्राध्यायपरायणः ।
शिवयोगमिह प्राप्य हृष्टचित्तो बभूव सः ।। 439

तस्मिन्योगे स विप्रेन्द्रश्चकारोपोषणं निशि ।
चकार परया भक्त्या तदा जागरणं द्विजः ।। 440

देवा ऊचुः -

शिवयोगस्य किं विष्णो लक्षणं तद्वदस्व नः ।
यं प्राप्योपोषणं चक्रे तथा जागरणं द्विजः ।। 441

जागरेणोपवासेन तस्मिन्योगे च किं फलम् ।
इदं सर्वं विशेषेण वद कारुणिकोत्तम ।। 442

विष्णुरुवाच -

सपातार्द्रा सोमयुक्ता भूता या स्यान्महानिशि ।
शिवयोगः स विख्यातः सर्वकर्मफलप्रदः ।। 443

तस्मिन्योगे नरः स्नात्वा पूजयित्वा महेश्वरम् ।
सर्वपापविनिर्मुक्तः सद्यो जातिस्मरो भवेत् ।। 444

तस्मिन्योगे महादेवः सर्षपैः सतिलैर्यवैः ।
अखण्डबिल्वपत्रैश्च पूजनीयः सदाशिवः ।। 445

अयं योगो महापुण्यः कोटिचन्द्रग्रहैः समः ।
कोटिसूर्यग्रहैस्तुल्यः सोभो(योगो)ऽयं कोटिपर्वभिः ।। 446

तस्मिन्योगे स विप्रेन्द्रो योगमाहात्म्यविन्मुदा ।
निशि जागरणं चक्रे केदारेशं समर्चयन् ।। 447

स पूजयोपवासेन निशि जागरणेन च ।
प्रातर्जातिस्मरो जातस्तत्वज्ञानमवाप्य च ।। 448

स भूतभाविजन्मानि ज्ञात्वा सर्वाणि तत्क्षणे ।
परं निर्वेदमापन्नो निषण्णोऽभूत्तदा सुराः ।। 449

स ततोऽष्टाशीतिलक्षदुष्टकुत्सितयोनिषु ।
सहस्रवारं जन्मानि भविष्यन्तीत्यबुध्यत ।। 450

तानि जन्मान्यसम्प्राप्य दुःखमप्राप्य च स्वयम् ।
मुक्तस्तु न भविष्यामि सर्वथेत्यन्वबुध्यत ।। 451

यतः प्राप्यानि जन्मानि मयैतावन्त्यतो मम ।
न भविष्यन्ति देहान्ताः शिवस्मरणपूर्वकम् ।। 452

यस्य देहक्षयो भावी शिवस्मरणपूर्वकम् ।
न तस्य जन्मसम्बन्धप्रापकादृष्टसङ्गमः ॥ 453

मरणं यस्य वा जन्तोः शिवस्मरणपूर्वकम् ।
स सभाग्यः स निर्दग्धदुष्टादृष्टौघसन्ततिः ॥ 454

अनेकधा कृत येन श्रीमहादेवपूजनम् ।
तस्य स्यान्मरणं जन्तोः शिवस्मरणपूर्वकम् ॥ 455

**विष्णुरुवाच -**

इति सञ्चिन्त्य सञ्चिन्त्य शिवपूजाप्रभावतः ।
कालव्यूहेन जन्मानि सम्प्राप्तुं यत्नवानभूत् ॥ 456

सरीसृपादिजन्मानि स सम्प्राप्य पुनः पुनः ।
चण्डालनारी समभूत्स तत्वज्ञो विचक्षणः ॥ 457

चण्डालजन्म सम्प्राप्य श्वमांसं सुरया सह ।
पक्तुं प्रचक्रमे देवाः कपालेन चिताग्निना ॥ 458

श्वमांसं सुरया सिक्तं पच्यमानं विलोक्य सः ।
चर्मणा पिहितं चक्रे तत्कपालमुखं तदा ॥ 459

तदानीमागतस्तत्र दधीचिर्मुनिसत्तमः ।
तामद्राक्षीत्ततो नारीं श्वमांसपचनोन्मुखीम् ॥ 460

तामुवाच ततो नारीं मुनिर्विस्मितमानसः ।
चर्मणा पिहितं दृष्ट्वा कपालं मांससंयुतम् ॥ 461

दधीचिरुवाच -

अमेध्यतरमेतद्धि श्वमांसं पच्यते त्वया ।
किमर्थमेतदधुना चर्मणा पिहितं मुखम् ॥ 462

अमेध्यतरवस्तूनि न सन्त्येतदपेक्षया ।
चर्मणैतत्पिधानेन(च) वद कारणमस्ति किम् ॥ 463

विष्णुरुवाच -

इति तद्वचनं श्रुत्वा सत्यमुक्तं-वचस्त्वया ।
प्रणम्य विनयादाह स चण्डालीस्वरूपभाक् ॥ 464

देवोत्तमं महादेवं ये वदन्त्यन्यथा जनाः ।
तद्दृष्टिपातभीत्यैतच्चर्मणा पिहितं मया ॥ 465

न यैरव्यभिचारेण क्रियते शिवपूजनम् ।
तद्दृष्टिपातभीत्या .... .... ॥ 466

देवोत्तमे शिवे योऽन्यदेवतासमतां वदेत् ।
तद्दृष्टिपातभीत्यैतच्चर्मणा पिहितं मया ॥ 467

शिवालयाङ्गणे चर्मपादत्राणं य उत्सृजेत् ।
स कोटिकल्पपर्यन्तं नरके वत्स्यति ध्रुवम् ॥ 468

यः पादत्राणपादः सन् प्रविशेच्छिवमन्दिरम् ।
स कल्पकोटिपर्यंयन्तं ध्रुवं चण्डालतां व्रजेत् ॥ 469

अविनीतो महादेवं यः पूजयितुमिच्छति ।
स याति नरकं कल्पकोटिपर्यंयन्तकालिकम् ॥ 470

पूजाद्रव्यमनादाय यो गच्छेच्छिवमन्दिरम् ।
स याति नरकं घोरं यावदाचन्द्रतारकम् ॥ 471

यः सन्ततमुमाकान्तं नाराधयाति शङ्करम् ।
स कण्टकतनुस्तिष्ठेच्छ्मशाने विषभूरुहः ॥ 472

न नमेच्छ्रद्धया भक्त्या यो देवं पार्वतीपतिम् ।
स वनेऽजगरो भूत्वा नरकं चाधिगच्छति ॥ 473

प्रदक्षिणं महेशस्य यो भक्त्या न करिष्यति ।
स तैलघर्षकागारे वलीवर्दो भविष्यति ॥ 474

कुर्याच्छिवालये यस्तु मूत्राद्युत्सर्जनं खलः ।
स कल्पकोटिपर्यन्तं क्रमिकुण्डे पतिष्यति ॥ 475

यो न स्तौति शिवं भयत्या स्तोत्रैर्वेदोपबृह्मितैः ।
स पुनः पुनराजन्म मूक एव भविष्यति ॥ 476

यः पूजितं महादेवं न पश्येत्सकृदेव वा ।
स कोटियुगपर्यन्तमन्ध एवाभिजायते ॥ 477

कुर्याच्छिवालयप्रान्ते यो मलोत्सर्जनं नरः ।
सोऽचिकित्स्यमहारोगस्तथोन्मत्तो भविष्यति ।। 478

अगस्त्यः (उवाच) -

इत्युक्तं तद्वचः श्रुत्वा ब्रह्माद्या हृष्टमानसाः ।
चण्डालीरूपमासाद्य किं चकारेति चाब्रुवन् ।। 479

विष्णुरुवाच -

कायव्यूहेन सर्वाणि शरीराणि यथाक्रमम् ।
सम्प्राप्य सर्वदुःखानि स सम्प्राप ततः परम् ।। 480

ततः पुनः समागत्य केदारेशममुं प्रभुम् ।
सम्पूज्य सर्वबन्धेभ्यो मुक्तो मुक्तो बभूव यः ।। 481

अयं द्विजवरो दृष्टो योऽयमस्य विमोचकः ।
विभूतिदानचतुरः सदयोऽधिगतोदयः ।। 482

भव्यो भस्माङ्गरागोऽयं ब्राह्मणो भगवत्प्रियः ।
भस्माङ्गरागभक्तस्तु भगवद्भक्त उच्यते ।। 483

एतस्य सन्निधानेन प्राप्तभस्मायमीदृशः ।
अधुना भगवद्रूपो भविष्यति न संशयः ।। 484

पुरा कश्चिद् द्विजवरः काशीं गन्तुं समुद्यतः ।
शनैः शनैर्दक्षिणतश्चचालागमतत्त्ववित् ।। 485

मध्येमार्गं क्वचित्स्थित्वा रात्रिं नीत्वाऽरुणोदये ।
कृत्वा शौचादिकं सर्वं भस्मस्नानं चकार सः ॥ 486

ततस्तं भस्मना स्नातं शुचिं विप्रशिरोमणिम् ।
ददर्श पथिकः कश्चित्तदा सर्पविषावृतः ॥ 487

ततः प्रणम्य तं विप्रं स्ववृत्तान्तमशेषतः ।
तस्मै निवेदयामास सर्पदंशं च सत्वरम् ॥ 488

ततस्तं निर्गतप्राणवायुं दृष्ट्वा द्विजोत्तमः ।
तदङ्गं भस्मसंवीतं चकार प्रीतमानसः ॥ 489

ततस्तं नेतुमचिरादागता यमकिङ्कराः ।
अथ ते भस्मसवीतं दृष्ट्वा प्राहुः परस्परम् ॥ 490

यमदूता ऊचुः -

अयं कृताघसङ्घोऽपि भस्मसंवीतविग्रहः ।
पूतात्मा जात एवाद्य नास्य पापकृतं भयम् ॥ 491

विलयं यान्ति पापनि भस्मसम्बन्धमात्रतः ।
अत एवास्य पापेभ्यो न भयं विद्यते ध्रुवम् ॥ 492

भस्म प्राप्तमनेनाद्य भूरिभाग्यवशादिह ।
प्रायः पूर्वभवेऽनेन बहुपुण्यं कृतं भवेत् ॥ 493

देहावसानसमये भस्म प्राप्तमयत्नतः ।
अनेनाद्य कथं प्राप्तं बहुभस्माप्ययत्नतः ॥ 494

लब्धभस्मकणार्धेनाप्यर्धेन्दुललितालकाः ।
बभूवुर्बहवो भूरिभस्मनापि किमद्भुतम् ॥ 495

आपादमस्तकं सम्यग्भस्मनालङ्कृतः स्वयम् ।
कृतकृत्योऽत एवाद्य मुक्तिरस्य भविष्यति ॥ 496

ज्ञातुं न शक्यते भाग्यं पुरुषाणामयं यतः ।
कृताघोऽपि प्राप्तभस्मा मुक्तः संसारबन्धनात् ॥ 497

एतादृशो महद्भाग्यं दिष्ट्याऽस्य समुपस्थितम् ।
किमतोऽस्त्यधिकं भाग्यमयत्नेनापवर्गदम् ॥ 498

तनुर्विभूतिसङ्क्रान्ता दृष्टाऽदृष्टवशादिह ।
दिनमद्याभवद्धन्यं यतो भस्मविभूषणः ॥ 499

दृष्टोऽस्माभिरदृष्टेन किमस्तीष्टमतोऽधिकम् ।
अयं द्विजवरो दृष्टो योऽयमस्य विमोचकः ॥ 500

विभूतिदानचतुरः सदयोऽधिगतोदयः ।
भव्यो भस्माङ्गरागोऽयं ब्राह्मणो भगवत्प्रियः ॥ 501

भस्माङ्गरागभक्तोऽयं भगवद्भक्त उत्तमः ।
एतत्कृपावशादेव प्राप्तभस्मायमुत्तमः ॥ 502

अधुना भगवद्रूपो भविष्यति न संशयः ।
अयं चेन्नीयतेऽस्माभिः प्रमादान्मोहतोऽपि वा ।। 503

तदास्मासु यमः क्रूरः कृपां नैव करिष्यति ।
किञ्चाधुनैनं नेष्यन्ति वीराः शङ्करकिङ्कराः ।। 5C4

तेषां भस्माङ्गरागाणामुत्कण्ठा नयने यतः ।
भस्माङ्गरागपूताङ्गं दृष्ट्वा शङ्करकिङ्कराः ।। 505

द्रुतं हसन्ति गायन्ति नन्दन्त्यभिनयन्ति च ।
न नेष्यन्ति चेदेनं भस्माङ्गाः शिवकिङ्कराः ।। 506

कमन्यं ते च नेष्यन्ति भस्मभासितविग्रहाः ।
एनमानेतुमचिराद्भगवानिन्दुशेखरः ।। 507

भस्माङ्गरागान् फालक्षः प्रेषयिष्यति शाङ्करान् ।
यतो भस्माङ्गरागेषु भगवान्प्रीतमानसः ।। 508

अधुनैव स्वयं देवः प्रेषयिष्यति शाङ्करान् ।
भस्माङ्गरागपूताङ्गं संवीक्ष्य भगवानपि ।। 509

समायात्येव सहसा स यतो भक्तवत्सलः ।
भस्मच्छन्नशरीरस्य नोपेक्षां च करिष्यति ।। 510

त्रिणेत्रप्रेमपात्रेऽस्मिन्भस्मच्छन्ने त्रिलोचनः ।
स्वात्मनः प्रियपात्रत्वं सद्यः प्रकटयिष्यति ।। 511

**विष्णुरुवाच -**

इत्युक्त्वा संस्थितास्तत्र ते कृतान्तस्य किङ्कराः ।
शङ्करप्रेषितास्तत्र शाङ्कराश्च समागताः ॥ 512

भस्माङ्गरागपूताङ्गं ते दृष्ट्वाऽथ ततः परम् ।
सन्तुष्टाः पूजयामासुः भूयस्तं भस्मना भुवि ॥ 513

ततो विमानरत्ने तं ते विभूतिकणावृतम् ।
उपवेश्य पुनः पुष्पैः पूजयामासुरादरात् ॥ 514

कल्पवृक्षसमुद्भूता पुष्पवृष्टिरभूत्ततः ।
देवदुन्दुभयो नेदुर्ननृतुश्चाप्सरोगणाः ॥ 515

ततो ययुः शिवगणास्तं गृहीत्वा शिवान्तिकम् ।
देवदुन्दुभिनिर्ह्रादशङ्खनादपुरः सरम् ॥ 516

ददौ तस्मै कृपासिन्धुर्गाणपत्यं महेश्वरः ।
भस्माङ्गरागमात्रेण त्रिणेत्रं च चकार तम् ॥ 517

निर्धूतपापः सम्प्राप दुष्प्रापं तपसामपि ।
तस्मात्सर्वप्रयत्नेन भस्मस्नानं द्विजादिभिः ॥ 518

कर्तव्यं मन्त्रपूतेन भस्मना विधिपूर्वकम् ।
शैवधर्मरताता धन्या धन्या भस्मविभूषणाः ॥ 519

धन्याः शिवार्चनरता धन्याः पञ्चाक्षरप्रियाः ।
कलौ द्विजा भविष्यन्ति भस्मस्नानविवर्जिताः ।। 520

ते पतिष्यन्ति नरके यावदाचन्द्रतारकम् ।
कलौ द्विजा भविष्यन्ति शिवधर्मविवर्जिताः ।। 521

ते पतिष्यन्ति .... .... ।
कलौ द्विजा भविष्यन्ति शिवध्यानविवर्जिताः ।। 522

ते पतिष्यन्ति .... .... ।
कलौ द्विजा भविष्यन्ति शिवभक्तिविवर्जिताः ।। 523

ते पतिष्यन्ति .... .... ।
कलौ द्विजा भविष्यन्ति त्रिपुण्ड्रानङ्किताः सदा ।। 524

ते पतिष्यन्ति .... .... ।
कलौ द्विजा भविष्यन्ति रुद्राक्षानङ्किताः सदा ।। 525

ते पतिष्यन्ति .... .... ।
कलौ द्विजा भविष्यन्ति त्यक्तलिङ्गार्चनाः सदा ।। 526

ते पतिष्यन्ति .... .... ।
कलौ द्विजा भविष्यन्ति त्यक्तरुद्रजपाः सदा ।। 527

ते पतिष्यन्ति .... .... ।
कलौ द्विजा भविष्यन्ति शिवस्तुतिपराङ्मुखाः ।। 528

ते पतिष्यन्ति नरके यावदाचन्द्रतारकम् ।
कलौ द्विजा भविष्यन्ति शङ्करस्तुतिनिन्दकाः ॥ 529

ते पतिष्यन्ति ... ... ... ।
क्वचित्क्वचिद्भविष्यन्ति कलौ शङ्करपूजकाः ॥ 530

कलिस्थाः दूषयिष्यन्ति दृष्ट्वा तानपि मोहतः ।
क्वचित्क्वचिद्भविष्यन्ति कलौ भूतिविभूषणाः ॥ 531

कलिस्थाः ... ... ... ।
क्वचित्क्वचिद्भविष्यन्ति कलौ रुद्रजपोत्सुकाः ॥ 532

कलिस्थाः ... ... ... ।
क्वचित्क्वचिद्भविष्यन्ति कलौ पञ्चाक्षरप्रियाः ॥ 533

कलिस्थाः ... ... ... ।
क्वचित्क्वचिद्भविष्यन्ति कलौ शिवकथोत्सुकाः ॥ 534

कलिस्थाः ... ... ... ।
क्वचित्क्वचिद्भविष्यन्ति कलौ शैवजनप्रियाः ॥ 535

कलिस्थाः दूषयिष्यन्ति दृष्ट्वा तानपि मोहतः ।
प्रायः कलिसमाक्रान्ता भविष्यन्ति कलौ नराः ॥ 536

कलिरूपमहापापसङ्क्रान्ता ये दुरासदाः ।
ते कथं वा भविष्यन्ति शैवाः शिष्टजनप्रियाः ॥ 537

यदि शैवा भविष्यन्ति कलावपि तपोबलात् ।
ते तरिष्यन्ति संसारघोराम्भोनिधिमुत्तमाः ।। 538

शैवः सन् यः कलौ नित्यं शङ्करं पूजयिष्यति ।
स धन्यः स तपोमूर्तिः स पुण्यः सोऽतिपावनः ।। 539

कलिपातकनिर्मुक्तः कलौ शैवो भविष्यति ।
शैवो यस्मात्कलियुगे भवत्यत्यन्तदुर्लभः ।। 540

अशैवो यः कलियुगे स एव कलिसंश्रयः ।
स एव पातकी लोके स एव नरकोचितः ।। 541

पुरा सर्वाणि पापानि सुरापानादिकानि वै ।
एकीभूयाधितस्थुश्च दुःखितानि यमाङ्गणम् ।। 542

तानि पापानि सर्वाणि दृष्ट्वा कालः कदाचन ।
बभाषे धर्मतत्वज्ञो धर्मशास्त्रविचक्षणः ।। 543

यमः (उवाच) -

अशैवेष्वेव तिष्ठन्तु पापान्येतानि सर्वदा ।
अशैवादपरो लोके नास्ति पापाश्रयो यतः ।। 544

न येषां भस्मरुद्राक्षेष्वास्था दुष्कर्मणां सदा ।
तेष्वेवामूनि पापानि नित्यं तिष्ठन्तु भागशः ।। 545

त्रिपुण्ड्रधारणे श्रद्धा न येषां दुष्टचेतसाम् ।
तेष्वेवामूनि पापानि सदा तिष्ठतु भागशः ॥ 546

शिवलिङ्गार्चने श्रद्धा न येषां पापचेतसाम् ।
तेष्वेवामूनि ... ... ... ॥ 547

शिवानुचिन्तने श्रद्धा न येषां पापचेतसाम् ।
तेष्वेवामूनि .... .... .... ॥ 548

महादेवस्तुतौ श्रद्धा न येषां पापचेतसाम् ।
तेष्वेवामूनि .... .... .... ॥ 549

महेशदर्शने श्रद्धा न येषां पापचेतसाम् ।
तेष्वेवामूनि .... .... .... ॥ 550

महेश्वरकथाश्रद्धा न तेषां पापचेतसाम् ।
तेष्वेवामूनि पापानि सदा तिष्ठन्तु भागशः ॥ 551

पञ्चाक्षरजपे श्रद्धा न येषां पापचेतसाम् ।
तेष्वेवामूनि .... .... .... ॥ 552

श्रीमद्रुद्रजपे श्रद्धा न येषां पापचेतसाम् ।
तेष्वेवामूनि .... .... .... ॥ 553

शिवोत्कर्षे परा श्रद्धा न येषा पापचेतसाम् ।
तेष्वेवामूनि .... .... .... ॥ 554

शिवस्थाने परा श्रद्धा न येषां पापचेतसाम् ।
तेष्वेवामूनि .... .... .... ॥ 555

अविमुक्ते परा श्रद्धा न येषां पापचेतसाम् ।
तेष्वेवामूनि .... .... .... ॥ 556

श्रीमद्विश्वेश्वरे श्रद्धा न येषां पापचेतसाम् ।
तेष्वेवामूनि .... .... .... ॥ 557

श्रीमुक्तिमण्डपे श्रद्धा न येषां पापचेतसाम् ।
तेष्वेवामूनि .... .... .... ॥ 558

श्रीमदन्तर्गृहे श्रद्धा न येषां पापचेतसाम् ।
तेष्वेवामूनि .... .... .... ॥ 559

श्रीकालभैरवे श्रद्धा न येषां पापचेतसाम् ।
तेष्वेवामूनि ... ... ... ॥ 560

ज्ञानवाप्यां परा श्रद्धा न येषां पापचेतसाम् ।
तेष्वेवामूनि ... ... ... ॥ 561

मणिकर्ण्यां परा श्रद्धा न येषां पापचेतसाम् ।
तेष्वेवामूनि ... ... ... ॥ 562

शिवभक्तजने श्रद्धा न येषां पापचेतसाम् ।
तेष्वेवामूनि .... .... .... ॥ 563

शिवरात्रव्रते श्रद्धा न येषां पापचेतसाम् ।
तेष्वेवामूनि .... .... .... ॥ 564

सोमवारव्रते श्रद्धा न येषां पापचेतसाम् ।
तेष्वेवामूति पापानि सदा तिष्ठन्तु भागशः ॥ 565

अशैवेष्वेव गेहेषु तिष्ठन्त्वेतान्यसंशयम् ।
अद्यैव सत्वरं यान्तु रेरे पापाधिदेवताः ॥ 566

**विष्णुरुवाच -**

इत्युक्त्वा प्रेषयामास यमः पापानि सत्वरम् ॥ 567

अशैवेषु ततस्तानि स्थितान्येतानि सन्ततम् ।
जन्मजन्मान्तरकृतं पापं यस्य फलोन्मुखम् ॥ 568

न तस्य जायते श्रद्धा विभूत्युद्धूलनादिषु ।
जन्मजन्मान्तरकृतं तपो यस्य फलोन्मुखम् ॥ 569

तस्यैव जायते श्रद्धा भस्मस्नानादिकर्मसु ।
फलोन्मुखतपोयोगात् भस्मस्नानरता द्विजाः ॥ 570

कुर्वन्ति भस्मना स्नानं मन्त्रपूतेन भस्मना ।
शिवार्चनेन नश्यन्ति पापानि विविधान्यपि ॥ 571

शिवार्चनेन प्राप्यन्ते धर्मादीनि फलान्यपि ।
धर्मादिफलहेतुत्वं यतः श्रौते शिवार्चने ॥ 572

सर्वकामप्रदं पुण्यं शिवलिङ्गस्य पूजनम् ।
सर्ववेदश्रुतं पुण्यं महापातकनाशनम् ।। 573

कृतैरपि महादानैः कोटिशो विधिपूर्वकम् ।
शिवार्चनफलं यावत् तावन्नावाप्यते ध्रुवम् ।। 574

कृतैरपि महायागैः कोटिशो विधिपूर्वकम् ।
शिवार्चनफलं ... ... .... ।। 575

पूजितः शङ्करो भक्त्या द्वित्रिबिल्वदलैरपि ।
ददात्येव हि सन्तुष्टः सायुज्यमपि लीलया ।। 576

मुक्त्यर्थिभिः प्रयत्नेन कर्तव्यं शिवपूजनम् ।
सन्ततं श्रीमहेशस्य सर्वदेवशिखामणेः ।। 577

पूजां करोति यः प्रीत्या स वन्द्यो मम सर्वदा । 578

**अगस्त्यः (उवाच) -**

इत्युक्तं तद्वचः श्रुत्वा तमूचुः केशवं सुराः ।
काशीं गन्तुं समुद्युक्तः स किमासीदिति द्विजाः ।। 579

**विष्णुः उवाच -**

स गतो नर्मदां रम्यां शिवलिङ्गसमाश्रयाम् ।
गत्वा ददर्श तत्रस्थान्मुनीन् शिवपरायणान् ।। 580

तेऽथ संप्रस्थिताः काशीं महोत्साहसमन्विताः ।
स तैर्मुनिवरैः साकं अत्यन्तं भक्तिपूर्वकम् ।। 581

विवेश मुक्तिदां काशीं श्रीमहेशकृपाश्रयाम् ।
दृष्ट्वा ते मुनयः काशीं सतां सद्भुक्तिमुक्तिदाम् ।। 582

सन्तोषं परमं प्रापुर्धनं प्राप्येव निर्धनाः ।
ज्ञानवाप्यां ततः स्नात्वा सर्वे ते मुनिपुङ्गवाः ।। 583

ज्ञानेशं पुजयामासुर्दण्डपाणिं ततः परम् ।
मोदाद्यैर्ढुण्ढिराजं च पूजयित्वा ततः परम् ।। 584

बिल्वपत्राञ्जलिपुटाः प्रापुर्निर्वाणमण्डपम् ।
निर्वाणमण्डपे स्थित्वा विश्वेश्वरमुमापतिम् ।। 585

दृष्ट्वा प्रणम्य सन्तुष्टास्तुष्टुवुर्विविधैः स्तवैः ।
ततः परमतिस्वच्छैर्ज्ञानवापीजलैः सुराः ।। 586

अभिषिच्य प्रयत्नेन विश्वेश्वरमु (मनामयम्) मापतिम् ।
भस्मना बिल्वपत्रैश्च पूजयित्वाऽतिभक्तितः ।। 587

प्रदक्षिणनमस्कारान् कृत्वा ननृतुरास्तिकाः ।
निर्वाणमण्डपे सर्वे ततः परमघापहे ।। 588

उपविश्य यमासक्ताः प्रापुरानन्दमक्षयम् ।
ततः पञ्चाक्षरं शैवं सततं मुक्तिदायकम् ।। 589

जप्त्वा रुद्रजपं कृत्वा तुष्टुवुर्विश्वनायकम् ।
ततोऽन्तर्गृहयात्रादि सर्वं कृत्वा पुनः शिवम् ॥ 590

सम्पूज्य प्रययुः सर्वे कालनाथदिदृक्षया ।
कालकुण्डे ततः स्नात्वा दृष्ट्वा श्रीकालभैरवम् ॥ 591

पूजयामासुरघ्यार्द्यैरन्यैश्चाप्युपचारकैः ।
ततः ते संस्थिताः सर्वे काश्यां मुक्त्यै मुनीश्वराः ॥ 592

काले मुक्तिं गताः सर्वे सोऽपि मुक्तो द्विजोत्तमः ।
शिवार्चनेन सम्प्राप्ता काशी मुक्तिप्रदायिनी ॥ 593

शिवपूजाकामधेनुः किं वा नैव प्रयच्छति ॥ 594

**अगस्त्यः -**

इत्युक्त्वा त्रिष्णुना देवा ब्रह्माद्या विष्णुमादरात् ।
प्रणम्य पूजयामासुः शैवधर्मपरायणम् ॥ 595

ततो ब्रह्मादयो देवाः केदारेशं प्रयत्नतः ।
सम्पूज्य तुष्टुवुः स्तोत्रैर्देवदेवोत्तमं शिवम् ॥ 596

**विष्णुः (उवाच) -**

इत्यगस्त्यवचः श्रुत्वा सर्वपापविनाशकम् ।
अगस्त्यं पूजयामास स शैवः शिवपूजकम् ॥ 597

अतोऽन्वहं पूजनीयः प्रयत्नेन महेश्वरः ।
यतो वेदोदितं नित्यं श्रीमहादेव पूजनम् ।। 598

अत्र श्रीकुम्भघोणेशं पूजयित्वा वसाम्यहम् ।
मम श्रीत्र्यम्बकादन्यः पूज्यो नास्त्येव सर्वथा ।। 599

श्रूयते मुक्तिदा नित्यं महादेवकथा मया ।
महाशैवैः सह प्रीतिः क्रियते सर्वदा मया ।। 600

दिनानि क्षणवद्यान्ति शिवपूजापरस्य मे ।
दुःखमात्रं विहायात्र शिवक्षेत्रे वसाम्यहम् ।। 601

पूजयित्वाऽत्र गौरीशं कुम्भघोणाभिधे विधे ।
सर्वकामप्रदं लिङ्गं कुम्भघोणेश्वराभिधम् ।। 602

सर्वार्थदायकं (लिङ्गं) यस्माच्छ्रीमहादेवपूजनम् ।
अतः कुरुप्रयत्नेन शिवलिङ्गस्य पूजनम् ।। 603

शिवलिङ्गार्चनेनैव मुक्तिस्तव भविष्यति ।
शिवलिङ्गार्चनादन्यन्नास्ति मुक्तिप्रदं विधे ।। 604

उद्धूल्य भस्मनाङ्गानि धृत्वा चैव त्रिपुण्ड्रकम् ।
रुद्राक्षधारणां कृत्वा पूजयस्व सदाशिवम् ।। 605

अभिषिच्य महादेवं रुद्राध्यायेन सादरम् ।
भस्मना बिल्वपत्रैश्च पूजयस्व महेश्वरम् ।। 606

पूजान्ते जप यत्नेन शैवं पञ्चाक्षरं शिवे ।
श्रीरुद्रं जप यत्नेन ततः सर्वाघनाशनम् ।। 607

पञ्चाक्षरेण रुद्रेण प्रीणयस्व सदाशिवम् ।
रुद्रपञ्चाक्षराभ्यां तु प्रीतो भवति शङ्करः ।। 608

षडक्षरेण रुद्रेण यः प्रीणयति शङ्करम् ।
अघोरतपसा रुद्रं स प्रीणयति नान्यथा ।। 609

रुद्रपञ्चाक्षरजपी मुक्त एव न संशयः ।
न ततोग्रच तपः किञ्चित्सत्यमेवोच्यते मया ।। 610

सदाशिव उवाच -

इत्युक्तं विष्णुना ब्रह्मा मामनाद्यन्तमव्ययम् ।
पूजयित्वा स्थितो भक्त्या कुम्भघोणे मनारमे ।। 611

ये मामनन्य शरणाः सततं वरेण्यं
सम्पूजयन्ति नव कोमल बिल्वपत्रैः ।
ते निर्गुणा अपि गुणाम्बुधयो भवन्ति
विन्दन्ति मुक्तिमुपभुक्तसमस्तभोगाः ।। 612

।। इति श्रीशिवरहस्ये सप्तमाम्शो
कुम्भघोणमहिमानुवर्णनं नाम षड्विंशोऽध्यायः ।।



# ।। सप्तविंशोऽध्यायः ।।

शिवः -

मध्यार्जुनाभिधं क्षेत्रमेकमस्ति वरानने ।
तत्र सम्पूज्य मां देवा मुनयश्च वसन्ति हि ।। 1

मध्यार्जुनेशं यः पश्येन्निशि भस्मविभूषणः ।
समर्चयेच्च भक्त्या यः स मुक्तोभवति ध्रुवम् ।। 2

अत्र यः कृत्तिकायोगे कार्तिक्यां यत्नपूर्वकम् ।
सम्पूजयति मां भक्त्या स मुक्तो भवति ध्रुवम् ।। 3

तत्र यत्नेन मद्भक्तं सुवर्णाभरणादिभिः ।
यः पूजयेत्स संसारान्मुक्तो भवति सर्वथा ।। 4

अत्र पातार्द्रसंयुक्त सप्तमी भानुवासरे ।
यो मां समर्चयेद्भक्त्या स मुक्तो भवति ध्रुवम् ।। 5

यस्तु कृष्णलमात्रं वा सुवर्णं भस्मधारिणे ।
ददाति परया भक्त्या स मुक्तो भवति ध्रुवम् ।। 6

मध्यार्जुने तपस्तप्तं वहुभिर्मुनिभिः पुरा ।
अविमुक्तमिदं प्राप्तं मुक्त्यर्थं कमलानने ।। 7

सार्धलक्षसहस्राणां मुनीनामूर्ध्वरेतसाम् ।
वासस्थलमभूत्पूर्वं श्रीमध्यार्जुनकं शिवे ॥ 8

पुरा दधीचिना तत्र तपस्तप्तमनेकधा ।
वसिष्ठाद्यैश्च मुनिभिस्तत्रतप्तं तपः शिवे ॥ 9

तस्मिन्कालेऽभवद्राजा धर्ममूर्तिरितिश्रुतः ।
तेन धर्मेण सततं कृतं राष्ट्रस्य पालनम् ॥ 10

चतुष्पादभवद्धर्मस्तस्मिञ्छासति भूतले ।
अधर्म सङ्क्षयो जातः सर्वस्मिन्पृथिवीतले ॥ 11

पुरा मध्यार्जुनक्षेत्रे कश्चिदासीच्छिवार्चकः ।
तमाह ब्राह्मणः कश्चिदूर्ध्वपुण्ड्रधरो भ्रमात् ॥ 12

द्विज उवाच -

ऊर्ध्वपुण्ड्रधरं पश्य मामनाकुलचेतसम् ।
शंसत्येष यथाकामं वार्तां कुरु मया सह ॥ 13

इति तद्वचनं श्रुत्वा भ्रमाद् दृष्ट्वा च तं द्विजम् ।
ततो जजाप श्रीरुद्रं भानुं पश्यञ्जले स्थितः ॥ 14

ततो ददर्श धर्मिष्ठं धर्ममूर्तिं स शाङ्करः ।
दृष्ट्वा तस्मै तदाचख्यौ वृत्तान्तमपि दुःखितः ॥ 15

शैव उवाच -

त्वयि शासति भूलोके धर्ममार्गप्रवर्तके ।
अद्यैवाभून्नृपश्रेष्ठ क्षेत्रेऽस्मिन् धर्मविप्लवः ॥ 16

ऊर्ध्वपुण्ड्रधरो विप्रः कश्चिद्दृष्टो मयाधुना ।
तं दुष्टमतिवेगेन छिन्धि छिन्धि शरोत्करैः ॥ 17

तस्य दर्शनमात्रेण द्रष्टव्यो भानुरादरात् ।
ततो रुद्रजपः कार्यो जले स्थित्वा प्रयत्नतः ॥ 18

ऊर्ध्वपुण्ड्रं करिष्यन्ति तान्दृष्ट्वाऽन्येऽपि मोहतः ।
तद्वत्कृत्वोर्ध्वपुण्ड्राणि यास्यन्ति नरकं द्विजाः ॥ 19

त्रिपुण्डकरणाभावं पातकं प्राहुरास्तिकाः ।
ऊर्ध्वपुण्ड्रस्य करणं पापमाहुर्मनीषिणः ॥ 20

गोमांसभक्षणं प्राहुः पातकं मुनिपुङ्गवाः ।
ऊर्ध्वपुण्ड्रस्य करणं तथा पापं नरोत्तम ॥ 21

शिवः (उवाच) -

इति तद्वचनं श्रुत्वा धर्ममूर्तिर्विचक्षणः ।
ऊर्ध्वपुण्ड्रधरं विप्रं तदा हन्तुं प्रचक्रमे ॥ 22

ऊर्ध्वपुण्ड्रधरं विप्रं तं बध्वा शकटे ततः ।
राजा विदारयामास क्रकचैरति दारुणैः ॥ 23

ततः स कारयामास डिण्डीरव मिलापतिः ।
ऊर्ध्वं पुण्ड्रं भ्रमेणापि माकुर्वन्तु नरा इतः ॥ 24

उद्धूलनं विना विप्रा मातिष्ठन्त्विवति सादरम् ।
पुनः स कारयामास डिण्डीरवमिलापतिः ॥ 25

त्रिपुण्ड्रधारणं त्यक्त्वा मातिष्ठन्त्विवति सत्वरम् ।
पुनः स कारयामास .... .... ॥ 26

रुद्राक्षधारणं त्यक्त्वा मातिष्ठन्त्विवति सत्वरम् ।
पुनः स कारयामास .... .... ॥ 27

रुद्राध्यायजपं त्यक्त्वा मातिष्ठन्त्विवति सत्वरम् ।
पुनः स कारयामास .... .... ॥ 28

पञ्चाक्षरजपं त्यक्त्वा मातिष्ठन्त्विवति सत्वरम् ।
पुनः स कारयामास .... .... ॥ 29

महादेवकथां त्यक्त्वा मातिष्ठन्त्विवति सत्वरम् ।
पुनः स कारयामास .... .... ॥ 30

महादेवार्चनं त्यक्त्वा मा तिष्ठन्त्विवति सत्वरम् ।
पुनः स कारयामास .... .... ॥ 31

शिवरात्रिव्रतं नित्यं कुर्वन्त्विवति विशेषतः ।
पुनः स कारयामास .... .... ॥ 32

सोमवारव्रतं नित्यं कुर्वन्त्विवति विशेषतः ।
पुनः स कारयामास .... .... ॥ 33

कालाष्टमीव्रतं नित्यं कुर्वन्त्विवति विशेषतः ।

सदाशिव उवाच -

इति डिण्डीरवं श्रुत्वा दधीचाद्या मुनीश्वराः ॥ 34

सन्तुष्टचित्ताः सम्प्रापुः धर्ममूर्तिं विचक्षणम् ।
ददृशुर्धर्ममूर्तिं ते भस्मोद्धूलित विग्रहम् ॥ 35

रुद्राक्षमालाभरणं त्रिपुण्ड्राङ्कितमस्तकम् ।
स धर्ममूर्तिर्धर्मात्मा दृष्ट्वा तान् मुनिपुङ्गवान् ॥ 36

अभ्युत्थायाति यत्नेन भूयो भूयो ननाम तान् ।
प्रणम्य प्रीत हृदयो रत्नसिंह्मासनेषु तान् ॥ 37

उपवेश्य यथाशास्त्रं पूजयामास सादरम् ।
यथावत्पूजितास्तेन मुनयो ब्रह्मवादिनः ॥ 38

चिरं जीवेति तं प्राहुर्धर्ममूर्तिं कृतार्चनम् ।
ततः कृताञ्जलिपुटं विनयानतकन्धरम् ॥ 39

धर्ममूर्तिं धर्मनिष्ठं दधीचिः प्राह सादरम् ॥ 40

दधीचिरुवाच-

धर्ममूर्ते धर्मनिष्ठ धर्ममूर्तिस्त्वमेव हि ।
यतोऽभूच्छैवधर्मेषु विश्वासो वैदिकेषु ते ।। 41

कृतकृत्योऽसि धन्योऽसि मान्योऽस्यस्माकमन्वहम् ।
यतोऽभूद्भवतो भक्तिः शैवधर्मेषु सन्ततम् ।। 42

शैवधर्मपरिभ्रष्टान्शिक्षयैवं नृपोत्तम ।
दुष्टानां शिक्षणं धर्मः शिष्टानां रक्षणं तथा ।। 43

तवानेनैव धर्मेण पुण्यवृद्धिर्भविष्यति ।। 44

शिवः (उवाच) -

इति तद्वचनं श्रुत्वा धर्ममूर्त्तिः कृताञ्जलिः ।
पप्रच्छ धर्मान् धर्मज्ञं दधीचिं मुनिसत्तमम् ।। 45

धर्ममूर्तिः (उवाच) -

धर्मः को वा श्रुतिप्रोक्तो यद्धर्माचरणान्मुने ।
प्रसीदति महादेवो देव देव शिखामणिः ।। 46

शिवः (उवाच) -

इति तद्वचनं श्रुत्वा दधीचिर्हृष्टमानसः ।
धर्मान्वक्तुं समारेभे भुक्तिमुक्ति प्रदान्शिवे ।। 47

दधीचिः (उवाच)–

भुक्तिमुक्तिप्रदा धर्माः शैवधर्माः श्रुतिश्रुताः ।
तद्धर्माचार निरताः पूजनीया महर्षिभिः ॥ 48

भस्मस्नानादयो धर्मा मोक्षधर्माः श्रुतिश्रुताः ।
तद्धर्माचरणं कार्यं सर्वैमोक्षेच्छुभिर्नरैः ॥ 49

त्रिपुन्ड्रधारणं चैव तथा रुद्राक्षधारणम् ।
रुद्राध्यायजपश्चैव बिल्वैः शङ्करपूजनम् ॥ 50

पञ्चाक्षरजपो भस्मोद्धूलनं शैवपूजनम् ।
इत्यादयः शैवधर्मा बहवः सन्ति भूपते ॥ 51

नोल्लङ्घनीयास्ते धर्माः सर्वैरपि कदाचन ।
शैवधर्मपरित्यागं यः कर्तुं यतते नरः ॥ 52

सद्य एव स हन्तव्य शिवधर्मपरैर्नृपैः ।
शैवधर्माः श्रुतिप्रोक्ताः श्रुतयश्च शिवात्मिकाः ॥ 53

शिवधर्मपरित्यागाद्यातना भवति ध्रुवम् ।
शिवाज्ञावाक्यमुल्लङ्घ्य यः प्रवर्तितुमिच्छति ॥ 54

स हन्तव्यः सद्य एव दयां त्यक्त्वा शितैःशरैः ।
शिवाज्ञावाक्यं .... .... ॥ 55

तस्मिन्दयां विधायान्ते यात्येवनरकं ध्रुवम् ।
शिवाज्ञावाक्यं .... .... ॥ 56

तस्य दृष्ट्वा मुखं सद्यः कर्तव्यं रविदर्शनम् ।
शिवाज्ञावाक्यं .... .... ॥ 57

तस्य कृत्वा शिरश्छेदं अश्वमेधफलं भवेत् ।
शिवाज्ञावाक्यमनिशं यः पालयति सादरम् ॥ 58

स पूजनीयो यत्नेन सादरं भक्तिपूर्वकम् ।
भस्मोद्धूलन पूताङ्गो योऽन्वहं शिवपूजकः ॥ 59

स पूजनीयो यत्नेन सादरं भक्तिपूर्वकम् ।
यः केवलं त्रिपुण्ड्राङ्कः सततं शिवपूजकः ॥ 60

स पूजनीयो यत्नेन .... .... ।
रुद्राक्षधारणं कृत्वा य्रोऽन्वहं शिवपूजकः ॥ 61

स पूजनीयो .... .... ।
शिवलिङ्गार्चनपरो योऽन्वहं शिवपूजकः ॥ 62

स पूजनीयो .... .... ।
पञ्चाक्षरजपासक्तो योऽन्वहं शिवपूजकः ॥ 63

स पुजनीयो .... .... ।
रुद्राध्याय जपासक्तो योऽन्वहं शिवपूजकः ॥ 64

स पूजनीयो .... .... ।
श्रीमहेशकथासक्तो योऽन्वहं शिवपूजकः ॥ 65

स पूजनीयो .... .... ।
बिल्वपत्रार्चनपरो योऽन्वहं शिवपूजकः ॥ 66

स पूजनीयो यत्नेन सादरं भक्तिपूर्वकम् ।
पुरा कश्चिदभूद्राजा शैवधर्मपरः सदा ॥ 67

स भूयः पूजयामास शैवधर्मपरायणान् ।
पञ्चाक्षरजपासक्तान् शिवपूजाविधि प्रियान् ॥ 68

स स्वयं पूजयामास शिवलिङ्गान्यनेकशः ।
स धूपैर्धूपयामास शिवलिङ्गानि नित्यशः ॥ 69

दीपस्तम्भाः सुवर्णाढ्याः कारितास्तेन शोभनाः ।
प्ररोपिता बिल्ववृक्षा आलयोपान्तभूमिषु ॥ 70

सर्वप्रदोषकालेषु स चकार शिवार्चनम् ।
नित्यं नक्तव्रतं तेन कृतं विधिपुरःसरम् ॥ 71

शिवं च संस्मरन्नेव कालं यापयति स्म सः ।
स शङ्कर प्रसादेन कामगं यानमाप च ॥ 72

तेन यानेन स नृपो नित्यं काशीं प्रयाति च ।
तत्र विश्वेश्वरं सम्यक्पूजयित्वा विधानतः ॥ 73

क्रत्वाऽन्तर्गृहयात्रादि पुनरायाति भूपतिः ।
स कदाचिद्रत्नभारैः स्वर्णभारैश्च भूपतिः ॥ 74

श्रीमद्विश्वेश्वरं लिङ्गं पूजयामास सादरम् ।
श्रीमद्विश्वेश्वरं लिङ्गं क्षीराद्यैरमृतैर्नृपः ॥ 75

अभिषिच्य नवैर्बिल्वैः पूजयामास कोटिशः ।
सोपानानि च रत्नाद्यैर्ज्ञानवाप्याः प्रयत्नतः ॥ 76

कारयामास भूपालो रत्नकोशेश्वराह्वयः ।
मोक्षलक्ष्मी विलासाख्ये मण्डपे रत्नराजितः ॥ 77

प्रासादः कारितस्तेन नानारत्नोज्ज्वलः शुभः ।
निर्वाणमण्डपस्तेन रत्नैरेव प्रयत्नतः ॥ 78

कारितो मणिसंरुद्धःस्तम्भैश्चात्युन्नतै र्नृपः ।
स कदाचित्त्रयोदश्यां प्रदोषे पार्वतीपतिम् ॥ 79

भक्त्या सम्पूजयन्नासीच्छिवैक हृदयो नृपः ।
तदानीं तस्य नृपते रन्ध्रान्वेषण तत्पराः ॥ 80

नगरं तस्य भूपाला सेनाभिः पर्यवारयन् ।
रुरुधुर्नगरद्वारं मत्तमातङ्गकोटयः ॥ 81

नानाशस्त्रसमाक्रान्तभटकोटि समन्विताः ।
तैर्मुक्तानि च शस्त्राणि बहूनि नगरान्तरे ॥ 82

तैरन्यान्यपि शस्त्राणि क्षिप्तानि क्रूरकर्मभिः ।
अथ सेनाधिपा राज्ञः सर्वशास्त्र विशारदाः ।। 83

राज्ञे निवेदयामासुः महद्वैरि कृतं भयम् ।
श्रुत्वापि तद्वचो राजा कुर्वन् शङ्करपूजनम् ।। 84

उत्तरं न ददौ तेभ्यो मौनमेवान्वगाहत ।
विधाय पूज्यं विधिवत् यथापूर्वं म भूपतिः ।। 85

निवेद्य पूजम्पिपशाय निर्ययौ शिवमन्दिरात् ।
स संस्थितानि शस्त्राणि नगरोपरि जालवत् ।। 86

ज्वज्ज्वाला समाकीर्णान्यालोक्याभूच्च विस्मितः ।
तदा नृपं समालोक्य शूरा नगरपालकाः ।। 87

प्रणम्य वक्तुमुद्युक्ता क्रूरवैरिकृतोद्यमम् ।। 88

नगरपालकाः ऊचुः -

मदधारासमाक्रान्त मत्तमातङ्गकोटयः ।
प्रतिद्वारं समाश्रित्य तिष्ठन्त्यगणिता नृप ।। 89

सारङ्गा इव तिष्ठन्ति तुरङ्गाश्च पुराङ्गणे ।
द्रष्टुं न शक्यते राजन् तत्तुरङ्गाङ्ग सङ्गमः ।। 90

व्यूथयन्ति तुरङ्गास्ते शचीपति तुरङ्गमम् ।
सेना त्रिपुरसेनेव पुरमावृत्य तिष्ठति ।। 91

सुरसेनेव सा सेना विभात्यम्बुधिसन्निभा ।
नगरद्वारमारभ्य सा सेना शतयोजनम् ।। 92

तिष्ठत्यत्यन्तसम्मर्दरथवाजि समाकुला ।
चित्ररूपधरा सेना चित्रयुद्धविशारदा ।। 93

तिरस्करोति सा सेना राजन् चित्ररथानपि ।। 94

**दधीचिरुवाच -**

इति तद्वचनं श्रुत्वा धीरोदात्तः स भूपतिः ।
चारलक्षण सम्पन्नादूतानाह विचक्षणः ।। 95

**रत्नकोशेश्वर उवाच -**

चरन्तु चतुरा श्चारा वैरिसेनान्तरे ध्रुवम् ।
विचार्य वैरिचिह्नानि समायन्तु ममान्तिकम् ।। 96

किं ते विभूति भूषङ्गाः किं ते शङ्करपूजकाः ।
किं ते रुद्राक्षवलयाः किं ते शिवपरायणाः ।। 97

इदं विचार्य सकलं समायान्त्वथ सत्वरम् ।
सावधानेन चिह्नानि दृष्ट्वैवायान्तु सादरम् ।। 98

शैवधर्मरताः के वै वैरिणोऽप्यतियत्नतः ।
पूज्या एव ममात्यन्तं नान्यथा मम भाषणम् ।। 99

अशैवास्ते यदि तदा तानशैवान्निहनयहम् ।
हनिष्याम्यहमेकः सन् तानशैवान्दुराशयान् ।। 100

अशैवास्सन्ति यावन्तस्ते मे सहजशत्रवः ।
शैवा वसन्ति यावन्तस्ते मे सहजबान्धवाः ।। 101

दधीचिरुवाच -

इति तद्वचनं श्रुत्वा ययुश्चाराः सहस्रशः ।
नृपोऽन्यान्प्रेषयामास पुररक्षार्थमादरात् ।। 102

ततः पुनः स भूपालः प्रविश्य शिवमन्दिरम् ।
पुष्पाद्यैः पूजयामास त्रिपुरारि मुदारधीः ।। 103

कर्पूरराशि दीपाद्यैः स राजा शिवमन्दिरम् ।
दीपयामास दीपैश्च धूपयामास गुग्गुलैः ।। 104

ततः स शिवनैवेद्यं भुक्त्वा भूयो महेश्वरम् ।
सम्पूज्य शङ्करं द्वारि संविष्टः शङ्करं स्मरन् ।। 105

ततः समागताश्चारास्तदानीमेव सत्वरम् ।
विचार्य वैरिचिह्नानि सर्वाण्यपि यथा तथम् ।। 106

ततस्तं रत्नकोशेशं शिवसंविष्ट चेतसम्
प्रणम्योचुर्यथादृष्टं कृताञ्जलिपुटा भटाः ।। 107

चारा ऊचु -

अशैवा एव ते राजन् शिवचिह्नविवर्जिता: ।
एकोऽपि नास्ति तत्सैन्येशैवचिह्नाङ्कित: शुचि: ।। 108

दधीचिरुवाच -

इति तद्वचनं श्रुत्वा स भीमो नगराधिप: ।
ददौ वस्त्राणि चारेभ्यो विचित्राण्यति हृष्टधी: ।। 109

तान् संहर्तुं समादाय ब्रह्माद्यस्त्राणि कोटिश: ।
तदन्यान्यपि शस्त्राणि शात्रवाणि ददर्श स: ।। 110

शस्त्राणि तानि दृष्ट्वैव सर्वे नगरवासिन: ।
आबाल मात्रं सङ्क्षुब्धा: क्षणमात्रं भयाकुला: ।। 111

कल्पावसान: किमयं यद्वा सर्वक्षयोऽधुना: ।
किमेतन्नैवजानीम इति ते चुक्रुशुर्जना: ।। 112

तत: परं स भूपालो मन्दहासपुर:सरम् ।
रौद्रमस्त्रं लीलयैव प्रेषयामास भूपति: ।। 113

तदस्त्रमरि शस्त्राणि भस्मी कृत्यारिमण्डलम् ।
भस्मीकृत्य क्षणार्धेन पून: सम्प्राप भूपति: ।। 114

ततस्तदस्त्रं संहृत्य स भूपालः पुनः शिवम् ।
सम्पूज्य विविधैः पुष्पैश्चकार शयनंमुदा ।। 115

ततः प्रातः समुत्थाय स भूपालः शिवार्चकः ।
शिव सम्पूज्य विधिवत् नगरान्निर्ययौ बहिः ।। 116

स ददर्श चतुर्दिक्षु परितः शतयोजनम् ।
अस्थिभमां ससमाकीर्णं वैरिभस्मचयं नृपः ।। 117

ततः स वारुणास्त्रैश्च जलेनाप्लाव्य भूतलम् ।
दूरीचकार तद्भस्म वैरिदाहसमुद्भवम् ।। 118

पुष्पवृष्टिरभूद्दिव्या तदा सुरविनिः सृताः ।
देवदुन्दुभयो नेदुःर्तनृतुश्चाप्सरोगणाः ।। 119

ततः सन्तुष्टहृदयः स भूपः पुण्य सङ्कुलम् ।। 120

विवेशभीमनगरं पुष्पमिन्दुरिवाद्भुतम् ।
सामर्थ्यमीदृशं प्राप्तं तेन शङ्करपूजया ।। 121

शिवाराधन सक्तानामशक्यं नास्त्यतो नृप ।
स्वर्गापवर्गदातारं हरमेव हि सादरम् ।। 122

स्वर्गापवर्गविच्छिन्नाः पूजयन्ति स्तुवन्ति च ।
यस्य जन्म महद्भाग्यं बलं चातुलमीप्सितम् ।। 123

मोक्षश्चापेक्षितश्चान्ते तेन कार्यं शिवार्चनम् ।
स दुर्भग इति ज्ञेयो यो नार्चयति शङ्करम् ॥ 124

स पातकीति विज्ञेयो निरयोपमकल्पते ।
नान्येषामन्यवित्तानाम धन्यानां दुरात्मनाम् ॥ 125

भस्मभूषित सर्वाङ्गा निःसङ्गा एव केवलम् ।
भजन्ति गिरिजार्धाङ्गं दग्धानङ्गमसङ्गमम् ॥ 126

श्रीसदाशिव उवाच -

इति तद्वचनं श्रुत्वा स भूपालो मुनीश्वरम् ।
तद्दग्धसेना सङ्ख्यां मे वद ज्ञात्वा विशेषतः ॥ 127

रौद्रमस्त्रं पुरा प्राप स भूपालो मुनीश्वर ।
इदं सर्वमशेषेण वदेत्याह स शोभने ॥ 128

दधीचिरुवाच -

अक्षोहिणीनामभवच्छतलक्षं नृपोत्तम ।
गजास्तावन्त एवासन् चतुरङ्गबलोन्नताः ॥ 129

उष्ट्रास्तद्द्विगुणं राजन् बलीवर्दाश्च तुन्दिलाः ।
ततो दशगुणं राजन् वाजिनां चाभवद्ध्रुवम् ॥ 130

एतावत्सैन्यमेतेन भूपेनैकाकिना नृप ।
दग्धमेकेन शास्त्रेण(चास्त्रेण) रौद्रेणामिततेजसा ।। 131

पुरा स भूपतिः स्वच्छं रत्नमण्टपमुत्तमम् ।
कारयामास भूपालो देवदेवाय शम्भवे ।। 132

तत्र संस्थापयामास शिवलिङ्गमनुत्तमम् ।
ततः प्रादुरभूच्छम्भुः पूजितस्तेन भूपते ।। 133

ततस्तुष्टाव भूपालो महादेवं सुरोत्तमम् ।
स्तुतः प्रसन्नो गौरीशस्तस्मै शस्त्रं ददौ परम् ।। 134

तदैव शङ्करः प्राह कवचं च नृपोत्तम ।
स तेत कवचेनापि संवृतोऽभून्नराधिपः ।। 135

श्रीसदाशिव उवाच -

इति तद्वचनं श्रुत्वा तदा सन्तुष्टमानसः ।
मदीयं कवचं वक्तुं सद्य ऐवोपचक्रमे ।। 136

दधीचिरुवाच -

कवचं देवदेवस्य वक्ष्येश्शृणु नराधिप ।
येनाऽऽवृतो महादुःखैर्मुक्तो मुक्तिं च विन्दति ।। 137

ध्येयः श्रीमन्महादेवः साम्बः संसारमोचकः ।
पवित्रहृदयैः शुद्धैर्भस्मरुद्राक्षभूषणैः ।। 138

श्रीविश्वेश्वर मुमासहायमनघं विश्वात्मकं चिद्घनं ।
सत्यं ज्ञानमनन्तमक्षर मजं निर्लिप्तमेकं प्रभुम् ।। 139

ओङ्कारात्मकमक्षरं परतरं ब्रह्मादिभिर्भावितम् ।
सानन्दं हृदि भावयेद्ध्रुवभयध्वान्तान्तमानन्ददम् ।। 140

एवं ध्यात्वा महादेवं सच्चिदानन्दलक्षणम् ।
कवचेनावृतो भूत्वा मृत्युपाशैर्विमुच्यते ।। 141

यद्ब्रह्मरन्ध्रं मम संविदाभं
तद्ब्रह्मरन्ध्रं भगवानुमेशः ।
पायात्स संस्थानमनन्तलक्षणं
निवार्य सर्वाघकुलं निरन्तरम् ।। 142

तत्पार्श्वयोर्ग्निगमान्त चारी
रुद्रः शिखायां तु शिवावतंसः ।
शिरः शिखां पातु ममेन्दुचूडः
फालं ममाव्याज्ज्वलनोरुफालः ।। 143

वामं कपोलं मम पातु शम्भुः
कपोलमीशोऽवतु दक्षिणं मे ।

पायाद्गिरीशो मम वामनेत्रं
त्रिलोचनो दक्षिणमक्षि पायात् ॥ 144

भ्रूयुग्ममव्याद्वृषभध्वजो मे
भ्रूमध्यमव्यान्मखनाशदक्षः ।
नासापुटं पातु ममान्तकान्तको
नासान्तरं पातु पिनाकपाणिः ॥ 145

मुखंममाव्यात्स च पञ्चवक्त्रः
पायान्ममौष्ठौ गजकृत्तिवासाः ।
दन्तान्ममाव्यात्प्रभुरिन्द्र दन्तो
जिह्वां ममाव्यान्निगमान्तजिह्वः ॥ 146

श्रीनीलकण्ठोऽवतु कण्ठदेशं
पायान्महेशोऽवतु कण्ठपार्श्वम् ।
स्कन्धौ ममाव्यान्मदनान्तकारी
वक्षः स्थलं पातु ममाम्बिकेशः ॥ 147

विश्वम्भरोऽव्यादुदरं ममेदं
सर्वेश्वरो रक्षतु रोमकूपान् ।
आन्त्राणि पाया दुरुशक्तिरव्या-
दस्थीनि विश्वस्थितिनाशहेतुः ॥ 148

त्रिय(त्र्य)म्बको दक्षिणबाहुमव्या-

द्वामं ममाव्याद्भुजगावनद्धः ।

प्रकोष्ठमव्याद्गिरिराजचापो

हस्तौ ममाव्याद्धरशूलहस्तः ॥ 149

विशाखनाथोऽवतु हस्तशाखा-

न्नखान्ममाव्यान्नरसिंह्म हारी ।

पृष्ठं ममाव्यात्त्रिपुरारि रव्या-

त्कटिद्वयं मे गिरिजासहायः ॥ 150

कट्यन्तरालं मम पातु शम्भु-

रूरुद्वयं मे मृगशाबपाणिः ।

जानुद्वयं पातु जनार्दनेशो

गुल्फद्वयं पातु विराट्स्वरूपः ॥ 151

पादौ ममाव्यादमरैकवन्द्यः

पायाद्धरः पादतलद्वयं मे ।

पादाङ्गुलीः पातु समस्तरूपो

सर्वां तनुं पातु महेश्वरो मे ॥ 152

प्राच्यां सदा रक्षतु नीतुरुद्रो

कर्पूर गौरोऽवतु दक्षिणस्याम् ।

पातु प्रतीच्यां भगनेत्रहारी
पायादुदीच्यां जगदेकनाथः ॥ 153

ममोर्ध्वमव्यादुडुराजकान्ति-
रधो ममाव्यादुरगेन्द्र भूषः ।
दिगन्तरालेषु समस्तनाथः
पायाद्वृषीधीश्वरकेतुलक्ष्यः ॥ 154

नदीषु मां रक्षतु विश्वनाथः
कूपेषु मां रक्षतु विश्वमूर्तिः ।
पायात्समुद्रेषु जलाधिराजः
सरित्समुद्रादिविधानदक्षः ॥ 155

वापीषु पायादतिबाह्यवर्ती
दवानलात्पातु दरीशहारः ।
गर्तेषु पायात्सुरगर्वहारी
वृक्षेषु पायाद्वृषभध्वजोमाम् ॥ 156

पायाद्गजेभ्यो गजदर्पहारी
पायादहिभ्योऽपि हि वोरभद्रः ।
पायात्समेभ्यो विषसर्पहारी
पायात्त्रिमूर्तिर्विषवृश्चिकेभ्यः ॥ 157

भूताधिपः पातु विरोधिभीतेः

रक्षः पिशाचादिभयात्कपाली ।

मृत्युञ्जयो रक्षतु मृत्युभीतेः

कालाग्निरुद्रोऽवतु कालभीतेः ॥ 158

पापारिरव्याद्बहुपातकेभ्यः

पायाद्ग्रहेभ्यः कमलासनार्च्यः ।

श्रीविष्णुनेत्रार्चित पादपद्मः

पातु प्रभातेष्वखिलेषु शम्भुः ॥ 159

मध्यन्दिनेष्वेव मृडोऽनिशं मां

सायाह्नकालेऽप्यमराधिनाथः ।

महेश्वरो रक्षतु मध्यरात्रे

पायादुषस्यान्धकनाशहेतुः ॥ 160

सर्वेषुकालेष्वपि पातु शम्भु

रुमाङ्ग संश्लिष्टमनोक्षदेहः ।

मार्गे मृगव्याधवपुर्धरोऽव्याद्

युद्धेषु पायादसुरौघदारी ॥ 161

सर्वत्र सर्वातिहरो हरोव्या-

त्सर्वेप्सितार्थप्रदरूपधरी ।

रक्षाविहिनस्थलमस्ति यन्मे
तत्रावतु श्रीवरवीरभद्रः ॥ 162

कृत्वैवं कवचं पूर्वं स्तोत्रमेतत्पठेन्नरः ।
स्तोत्रं चैतन्महेशेन तस्मा आख्यातमादरात् ॥ 163

हर हर मखहर पुरारे
नष्टसुरासुर पापारेऽधमारे ।
अधमारे, भूतभयङ्कर,
भवभय हर, शङ्करसंसारे ।

सर्गस्थितिकारण, पुराण,-
विषमोक्षण, पिनाकपाणे !
त्रिशूलपाणे, चन्द्ररेखाभरण,
कारण कारण, मृगपाणे ।

मणिगणमण्डित,-फणगण-
फणिपतिभूषित, निर्जितकाम ।
सम्पूर्णकाम विविधा-
नन्तकल्याणगुण ।

गौरीमनोऽभिराम
योगिमनोऽभिराम ।

विविधर्निर्मितसाम ।
विविध श्रुत्यऽभिहित
परमाद्भुतधाम ।

स्मरशासन सुमेरु-
रत्नरुचिरवरशिखर ।
शिखरिवर कृतवास
कृत्तिसमलङ्कृत स्मरशासन ॥

संहृत धात्रवलेपन
सन्दग्धासुरवरकानन ।
हिमगिरिनिभवृषभाधिप-
केतन गुरुतर करुणानिधान ॥

धिक्कृत सर्वामरजना-
नवरतानन्दतुन्दिलस्वान्त ।
शार्दूलचर्मवसन-
समधिष्ठत महामहास्मशान ॥

भक्तभव भञ्जन सोम-
सूर्याग्निनयन कालकूटविषादन ॥
जय जय महेश केशवेश
जय जयाम्बिकेश ।

जय जय विश्वेश जय जय

गौरीश, जयजय प्रहृत गजाधीश ।

ज्वलज्ज्वालि महाज्वलन

संसारं हर संहरामरवर ।

नाशय नाशय पातक-

मुन्मूलयोन्मूलय भूतभयम् ।

बोधय बोधय बोध-

माह्लादयाह्लादय मानसम् ।

देहिदेहि मुक्तिमाप्त-

वरदाहिवन्द्य चन्द्रचूड ।

इन्द्रचन्द्रोपेन्द्रादि सकल-

सुररत्नकिरीटप्रभा भूषित ।

दिव्यरत्न खचित

विविधमणिपादुक ।

लक्ष्मीपति नयनारविन्द पूजितपादपद्म

मुनिवरहृत्पद्मनिवास भुक्तिमुक्तिप्रद ।

दलितामरवैरिनिकर राजितमृगशाबाङ्क-

चन्द्रावतंस समधिष्ठित काशीनगर ।

वरप्रद वरयोगिचित्तचिन्तित

चिन्तित जन मन्द(ा)र ।

मन्दारकुसुमकरवन्दारु वृन्दारक पूजित

जितमन्मथ नन्दानन्दिकुलकुलाचल ।

रसातल तलातल सुतल वितलादि नानाभुवन नायक

नायकरत्न रत्ननूपुरविलसत्पादपङ्कज ।

जगदेकनायक जयजय महादेव ।

देवतासार्वभौम -

भक्तार्तिभञ्जन करुणाकर शङ्करेश

शम्भो महेश भवभर्ग पिनाकपाणे ।

संसार सागरमसारमघोर माप्तं

मामुद्धर त्रिपुरसूदन मन्मथारे । 160

गौरीपते पुरहरामित पुण्यमूर्ते

हे मुक्तिदायक यमान्तक विश्वमूर्ते ।

संसारसागरमसार मघोर माप्तं

मामुद्धर त्रिपुरसूदन मन्मथारे । 161

विश्वाधिकाव्यय विशुद्धगुण स्वभाव

निर्द्वन्द्व नित्य निरुपाधिक निर्विकार ।

संसार सागरम् .... .... ॥ 162

सोम त्रिणेत्र हरिनेत्र समर्चिताङ्घ्रे
ब्रह्मेन्द्र मुख्य सुरवन्दित पादपद्म ।
संसार सागरम् .... .... । 163

निलिप्त पालय सुरासुर सर्गवर्ग-
सृष्टिस्थितिप्रलयकारण सर्वरूप ।
संसार सागरम् .... .... । 164

शार्दूलचर्मपरिवीत सुरासुरेश
कर्पूरगौर करुणाकर चन्द्रमौले ।
संसार सागरं .... .... । 165

बिल्वार्चनप्रिय विभूति विभूषिताङ्ग
निः सङ्ग निर्गुण निरञ्जन निर्विकार ।
संसार सागरम् .... .... । 166

योगीन्द्र मानससरोरुह सन्निविष्ट
श्रेष्ठेष्टदायक निनिष्टजनेष्ट शूलिन् ।
संसार सागरम् .... .... । 167

शान्तान्तकान्तक मुमुक्षुजनाभिसेव्यं
शैलाधिराजतनयायुतवामभागं ।
संसार सागरम् .... .... । 168

कल्याणरूप कनकाचलचारुचाप

विज्ञानरूप दुरवाप विहस्त पाप ।

संसार सागरं .... .... । 169

वेदान्तवेद्यविभवाव्यय शुद्ध वृत्ते

वृत्तिप्रदाभयद दक्षदयासमुद्र ।

संसार सागरं असारं अघोरमाप्तं

मामुद्धर त्रिपुरसूदन मन्मथारे ।। 170

महादेव उवाच -

इति स्तुत्वा तु मां अदौ कृत्वा तु कवचं नृप ।

सर्वपाप विनिर्मुक्तो मामुपैष्यत्यसंशयम् ।। 171

अनेन कवचेनैव संवृतो यत्र यो वसेत् ।

स सर्वपाप निर्मुक्तस्तत्र सौख्यं लभेन्नरः ।। 172

दधीचिः -

एवमुक्त्वा महादेवो रत्नकोशं प्रति प्रभुः ।

तत्रैव लिङ्गे काश्मीरे क्षणादन्तर्दधे नृप ।। 173

श्रीरुद्रकवचाक्रान्तः श्रीमहारुद्र पूजकः ।

सर्वपाप विनिर्मुक्तः शिवलोकं गमिष्यति ।। 174

श्रीरुद्रकवचं जप्त्वा कृत्वा श्रीरुद्रपूजनम् ।
जप्त्वा पञ्चाक्षरं शैवं निष्पापोजायते नरः ॥ 175

इदं तु कवच पुर्णं अम्बायै शङ्करोदितम् ।
षण्मुखायातिभक्ताय देव्यापि समुदीरितम् ॥ 176

ततः परं षण्मुखेन मह्यमुक्तं नराधिप ।
इदं तु परम प्रेम्णा मया तुभ्यमुदीरितम् ॥ 177

यदा प्रभृत्यनेनाहं कवचेनावृतो नृप ।
तदा प्रभृति दुःखानि न दृश्यन्ते मया ध्रुवम् ॥ 178

मुरस्य निधनं कर्तुं पुरा विष्णुः समुद्यतः ।
जयप्रदं किमस्तीति मामुवाच कृताञ्जलिः ॥ 179

ततस्तस्मै मयैवोक्तं इदं कवचमुत्तमम् ।
अनेन कवचेनैव संवृतः स ययौ हरिः ॥ 180

ततस्तेन जयः प्राप्तः कवचस्य प्रभावतः ।
अघोरवज्रकवचमिदं शैवमनुत्तमम् ॥ 181

अनेनकवचेनैव कवची समभूद्धरिः ।
एतत्कवच सम्वन्धात् हरिर्नावाप वेदनाम् ॥ 182

ततः परं मुरं हत्वा हरिः प्राप हिमालयम् ।
तदा कण्वः समागत्य हरिं प्राह कृताञ्जलिः॥ 183

कण्वः (उवाच) -

संसारताप सन्तप्तं मम चित्तमभूद्धरे ।
कथं संसारसन्ताप विच्छित्तिः स्याद्वदस्व मे ॥ 184

विष्णुः (उवाच) -

संसार सागरे घारे निमग्नानां दुरात्मनाम् ।
अपारकरुणासिन्धुः साम्ब एवावलम्बनम् ॥ 185

शिवमेव भजस्व सावधानं
सतु संसारदुरन्तदुःख हारी ।
वहुवस्तमुपास्य मुक्तिमापु-
स्त्रिपुरारिनिजभक्तमुक्ति हेतु ॥ 186

नवबिल्वदलैरथान्तकान्तकं
यज कामान्तक मन्तकान्तकम् ।
विपदन्तकमन्तकान्तकं
शिवलिङ्गात्मकमाशु सन्ततम् ॥ 187

बहुपापविमोचकं प्रभुं
यदिकालान्तकमर्चयिष्यति ।
सततं नियतं तदा भवा-
न्विषसंसारवशं न यास्यति ॥ 188

भज भर्गमनर्गलप्रभुं
भगवन्तं भगनेत्रहारिणम् ।
भवभीमभयं तदा मुने
न भवन्तं प्रति भावयिष्यति ॥ 189

भसिताभरणो भज प्रभुं
भवभीतिर्न भविष्यति ध्रुवम् ।
शुभदस्त्वयि शम्भुरव्ययो
नियतं तिष्ठति तं समर्चय ॥ 190

नवबिल्वपलाशकाशपुष्पैः
कुशपुष्पैः कनकाह्वयप्रसूनैः ।
भसितेन च फाललोचनं
शिवलिङ्गे सततं समर्चय ॥ 191

स कृदप्यमलैः सबिल्वपल्लवैः
कुशधुत्तूरपलाशकाशपुष्पैः ।
सजलैरभिपूज्य पार्वतीशं
सकलापज्जलधिं तरन्ति धीराः ॥ 192

हृदि तिष्ठति शैलजाधवे (पतौ)
शिवलिङ्गे च निरन्तरं शुभे ।

न यजन्ति नराधमाः सकृ-
        न्नरकावासरता निरन्तरम् ॥ 193

विदधाति परं पदं शिवः
        कुशपत्रैरपि साधु पूजितः ।
तमुपास्य महेश्वरं भ्रमा-
        त्सुरमन्यं समुपासते जनाः ॥ 194

भगमन्तमुमापतिं भवं
        भजनीयं न भजन्ति ये जनाः ।
नरकेषु पतन्ति ते जनाः
        सततं सत्यमुदीर्यते मया ॥ 195

दिवि ये न वसन्ति भूतलेऽपि
        ग्रसिताः संसृतिघोरदन्दशूकैः ।
द्विज ते शिवपूजनौषधं
        समवाप्यामृततां प्रयान्ति हि ॥ 196

सकृदप्यतिभक्तिपूर्वकं
        शिवमेवं प्रणमन्ति ते जनाः ।
अमरैरखिलैश्च ते नताः
        सततं सत्यमिदं ध्रुवं ध्रुवम् ॥ 197

क्रृतसर्वमखोऽपि जन्म धत्ते
क्रृतविश्वेशपदाम्बुजप्रणामः ।
न पुनर्जनिभाग्वदामि सत्यं
भुजमुद्धृत्य न संशयं कुरुध्वम् ॥ 198

अक्रृतेशपदाम्बुजप्रणामा
नरकावासमवाप्य दुःखभोगम् ।
समवाप्य मुहुर्मुहुर्निवृत्ता
न भवन्ति प्रलयेऽपि सत्यमेव ॥ 199

विविधामितपातकोच्चया ये
न नमन्ति त्रिपुरारिमादरेण ।
अत एव यमालयान्तरे ते
निवसन्त्यन्वहमाप्तदुःखभोगाः ॥ 200

प्रणमन्त्यमरास्त्रिलोचनं
मुनयः सिद्धगणाश्च सन्ततम् ।
निगमाश्च नमन्ति यं ततः
प्रणमस्व प्रणमाम्यहं तमीशम् ॥ 201

सकलामरवन्दनीयमैशं
पदपद्मं त्रिदशैकभागधेयम् ।

भज सन्ततमद्रिजासहायं
निरपायं निरवद्यमुक्त्युपायम् ॥ 202

यज कोमलबिल्वपल्लवै-
रनुवारं भुजगाधिपैकहारम् ।
सकलाघहरं निरस्तवीरं
हरमाराधय तत्परं सदारम् ॥ 203

भजतामभयप्रदं महेशं
भज मृत्युञ्जयमादरेण नित्यम् ।
तमपास्य न संवस द्विजं तं
हितमत्यन्तमुदीरितं मया ते ॥ 204

द्विज ते शिवतुल्यमुत्तमं
न शिवान्यत्तव दैवतं सुरेषु ।
अत एव निरन्तरं (सुरेषु) महेशं
भज फालस्फुरदुज्ज्वलत्त्रिपुण्ड्रः ॥ 205

द्विजदैवत दैवतं महेशं
यदि नाराधयसि प्रकाममीशम् ।
द्विजदैवत दानसङ्गता
तव सत्यं न वदामि नान्यथा ॥ 206

अत एव तदर्चितः शिवो
वितरत्येव तदीप्सितं फलम् ।
सितकेवलभस्मधारणं
विधिवद्भूरि विधाय सादरम् ॥ 207

सततं शिवनिष्ठचेतसां
तनुबन्धो न कदापि दुःखदः ॥ 208

श्रुतिबोधितभस्मधारणं
विहितं यच्छिवलिङ्गपूजनम् ।
तदिदं द्वयमास्तिकैर्द्विजै-
र्नपरित्याज्यमिति श्रुतिःस्वयम् ॥ 209

द्विज केवलभस्मधारणं
सततं केवललिङ्गपूजनम् ।
श्रुतिबोधितमित्यवेहि तस्मा-
त्तदुपास्यं द्वयमप्यनन्यभाजः ॥ 210

शिवमेव यजस्व सर्वकालं
शिवभिन्नं न यजस्व मोहतोऽपि ।
शिवभिन्नसमर्चनं वृथैवे-
त्यनुवारं कुरु निश्चयं द्विज त्वम् ॥ 211

शिव शङ्कर चन्द्रशेखरे
त्यतिभक्त्या वद सन्ततं मुदा च ।
शिवनामजपं विहृत्य नान्य-
ज्जपहोमादपि नाम सर्वथैव ।। 212

शिवनामसुधैव विप्र पेया
सततं मुक्तिमभीप्सता द्विजेन ।
शिवनामसुधापरा तु जिह्वा
द्विज नानाविधभूरिपुण्यलभ्या ।। 213

शिवनाम सुधारतैव जिह्वा
महतामेव भवत्यतोऽनुवारम् ।
शिवशङ्कर चन्द्रशेखरेति
त्रिपुरारे इति सञ्जपस्व नित्यम् ।। 214

शिवनामसुधां मुहुर्मुहुः
पिब सानन्दमनन्तरायमाशु ।
शिवनामसुधैव मुक्तिहेतु-
र्मुनिबृन्दैरखिलैश्च सेव्यमाना ।। 215

अमृतामृतमार्यं मुक्तिबीजं
शिवनामामृतमित्यवैमि नूनम् ।

अत एव मुहुर्मुहुर्मया
शिवनामामृतमेव पीयते ॥ 216

शिवनामसुधां निपीय भक्त्या
सुधियः साधु सुधां च नाद्रियन्ते ।
दिवि पीतसुधाः प्रयान्ति गर्भं
शिवनामामृतपाः प्रयान्ति मुक्तिम् ॥ 217

शिवनामसुधा विनिर्मिता
गिरिजेशेन पुरा कृपालुना ।
द्विज सात्कृतपुण्यसञ्चयै
र्मुहुरत्यन्तमुदा निपीयते ॥ 218

रसभाजनभोजने निदानं
रसना ह्येव यया मुहुः प्रकामम् ।
शिवनामसुधा निपीयते
नियमेनान्यविलापनं विहाय ॥ 219

शिवमर्चितमन्वहं प्रसूनै
र्नवबिल्वैरपि पश्य सावधानम् ।
इदमेव फलं मतं यतोऽक्ष्णो-
र्विलसत्पद्मपलशतुल्यकान्त्योः ॥ 220

नवबिल्वदलैः समर्चितं

शिवलिङ्गं द्विज साधु पश्यताम् ।

विविधामितघोरपापसङ्घः

प्रलयं याति न संशयस्तदैवम् ॥ 221

शृणु शर्वकथामघौघहन्त्री-

मनुवारं नियमेन सावधानम् ।

इदमेव फलं विनिश्चितं

श्रुतिभिः श्रोत्रयुगस्य वस्तुतस्तु ॥ 222

नवकोमलबिल्वपल्लवैः

शिवलिङ्गं सविधानमर्चयित्वा ।

शिवसात्कृतबिल्वपल्लवा-

न्समुपाघ्राय विनोदयस्व चित्तम् ॥ 223

स्पृश शङ्करमर्चितं त्रिकालं

सकलाघौघविनाशनाय नित्यम् ।

भज चेतसि भालचन्द्रमौलिं

मुहुरानन्ददमद्वितीयमेकम् ॥ 224

मनसा वचसा च कर्मणा

शिव एकः शिवया समन्वितः ।

भजनीय इति श्रुतिः स्वयं

प्रतिवारं प्रतिबोधकृत्सदा ॥ 225

त्रिपुरारिकथासुपूजनेऽपि

त्रिपुरारेरभिवीक्षणेऽपि चित्तम् ।

महतां भवति ह्यनन्यभाजां

न भवत्येव दुरात्मनां कदापि ॥ 226

दधीचिरुवाच -

इति विष्णुवचः श्रुत्वा कण्वः सन्तुष्टमानसः ।

शिवार्चनपरो जातः सर्वभावेन सर्वदा ॥ 227

अतो यत्नेन सततं कर्तव्यं शिवपूजनम् ।

शिवार्चनं यतो नित्यं भुक्तिमुक्तिफलप्रदम् ॥ 228

पुरा कश्चिदभूद्राजन् दरिद्रो द्विजबालकः ।

स ययाचे निशि क्षीरमन्नं यच्छाम्बिके मम ॥ 229

माता तद्वचनं श्रुत्वा बाष्पसङ्कुलितेक्षणा ।

बाष्पाणि दूरीकुर्वन्ती सुदती प्राह तं सुतम् ॥ 230

सुदती : (उवाच) -

कुतः क्षीरं मया देयं अभाग्याहं यतः सुत ।
अनर्चितहरा यस्मादभाग्यमत एव से ॥ 231

शिवार्चनपरा नित्यं मनोवाक्कायकर्मभिः ।
सम्प्राप्य महदैश्वर्यं ततो मुक्ता भवन्ति च ॥ 232

इति तद्वचनं श्रुत्वा तदोत्थाय शिवार्भकः ।
मध्यार्जुनमिदं क्षेत्रमवाप जननीयुतः ॥ 233

ततः स मुनिशार्दूलमगस्त्यं भस्मभूषितम् ।
प्रणम्य बिल्वपत्राद्यैः सम्पूज्योवाच बालकः ॥ 234

बाल उवाचः -

स्वामिन्नहं दरिद्रोऽस्मि दारिद्र्यान्मरणं वरम् ।
प्राप्यते हि महद्दुःखं दरिद्रेण मुनीश्वर ॥ 235

किं महाभग्यदं पुण्यं किं दारिद्र्यविनाशकम् ।
तद्वदस्व मुनिश्रेष्ठ तत्करिष्याम्यहं ध्रुवम् ॥ 236

अगस्त्यः -

बाल शीलय निर्लीलं बालेन्दुललितालकम् ।
स्वलीलया ते सकलं मङ्गलं कलयिष्यति ॥ 237

अमङ्गलहरो यस्मात् मङ्गलो मङ्गलापतिः ।
तमेवार्चय यत्नेन सर्वदारिद्र्यनाशकम् ॥ 238

पुण्यपुण्यं धर्मधर्मं मङ्गलानां च मङ्गलम् ।
पावनं पवनानां च जप शैवं षडक्षरम् ॥ 239

शिवलिङ्गं बिल्वपत्रैः पूजयस्वान्वहं मुदा ।
तत्पूजया महद्भाग्यं प्राप्तव्यं नात्र संशयः ॥ 240

न प्राप्यते महद्भाग्यं शिवलिङ्गार्चनं विना ।
अतोऽन्वहं प्रयत्नेन लिङ्गे पूजय शङ्करम् ॥ 241

जगत्यां सन्ति यावन्तो भाग्यवन्तो धनाश्रयाः ।
तावन्तो गिरिजाकान्तं नितान्तं पूजयन्ति हि ॥ 242

विना यज्ञमनायासमुपेन्द्रेन्द्रादयः शिवम् ।
समभ्यर्च्य महद्भाग्यं लब्ध्वा तिष्ठन्ति सन्ततम् ॥ 243

शिवलिङ्गार्चनेनैव विष्णुत्वं प्राप केशवः ।
ब्रह्मत्वमपि सम्प्राप ब्रह्मा शङ्करपूजया ॥ 244

इन्द्रत्वमिन्द्रः सम्प्राप श्रीमहादेवपूजया ।
वायुः सम्प्राप वायुत्वं श्रीमहादेवपूजया ॥ 245

न विष्णुत्वादिदातान्यो विना देवोत्तमं शिवम् ।
सत्यमेतत्पुनः सत्यमुद्धृत्य भुजमुच्यते ॥ 246

विष्णुर्यदर्चनादर्च्यस्तमेव गिरिजापतिम् ।
पूजयस्वातियत्नेन सर्वसम्पत्प्रदं प्रभुम् ॥ 247

शिवलिङ्गे शिवं नित्यं पूजयस्वातियत्नतः ।
प्रतिमापूजनाच्छ्रेष्ठं शिवलिङ्गस्य पूजनम् ॥ 248

शिवलिङ्गार्चनाच्छ्रेष्ठमन्यन्नैव हि दृश्यते ॥ 249

दधीचिः (उवाच) -

एवमुक्त्वा स्थितोऽगस्त्यः सनातनमृषिस्तदा ।
तदुक्तं वचनं श्रुत्वा तं प्रणम्याह सादरम् ॥ 250

सनातनः (उवाच) -

शिवलिङ्गानि पूज्यानि कानि कानि मुनीश्वर ।
एतत्सर्वं विशेषेण वद मह्यं कृपानिधे ॥ 251

दधीचिरुवाच -

इति तद्वचनं श्रुत्वा प्रहृष्टवदनो मुनिः ।
शिवलिङ्गस्वरूपाणि वक्तुं समुपचक्रमे ॥ 252

अगस्त्यः उवाच -

शिवलिङ्गानि तिष्ठान्ति विविधान्युत्तमानि च ।
तत्स्वरूपाणि सर्वाणि शृणु वक्ष्ये सनातन ॥ 253

शिवलिङ्गस्वरूपं तु वक्तुं यद्यपि नोचितम् ।
तथापि शिवभक्ताय तुभ्यं तत्प्रवदाम्यहम् ॥ 254

शिवलिङ्गस्य महात्म्यं यस्य कस्यापि सत्वरम् ।
न वक्तव्यं यतस्तत्तु गोपनीयं प्रयत्नतः ॥ 255

यस्यास्ति श्रुतिषु श्रद्धा यस्य श्रद्धा महेश्वरे ।
तस्यैव शिवमाहात्म्ये श्रद्धा नान्यस्य सर्वथा ॥ 256

यस्यास्ति शिवमाहात्म्ये श्रद्धा मुक्तिप्रदायिनी ।
तस्मै वक्तव्यमुत्कृष्टं शिवमाहात्म्यमादरात् ॥ 257

तवास्ति शङ्करे श्रद्धा ततः प्रायः पुरा भवान् ।
ब्राह्मणः केवला भूतिर्धृता च विधिवत्त्वया ॥ 258

सनातनः -

न कदापि पुरा कृतं मया
विधिवत्केवलभस्मधारणम् ।
यदि तत्कृतमादरात्तदा
मम जन्मेदमभूत्कथं मुने ॥ 259

अहमीदृशजन्मभाजनं
न पुरा ब्राह्मणजन्मभाजनम् ।

यदि तन्मम तद्भवेत्तदा
न शिवः साधु समर्चितः कथम् ॥ 260

न कदापि पुरा कृतं मया
विधिवत्केवलशङ्करार्चनम् ।
यदि तत्कृतमादरात्तदा
मम जन्मेदमभूत्कथं मुने ॥ 261

न कदापि पुरा कृतं मया
विधिवत्केवलमीशवन्दनम् ।
यदितत्कृतम् .... .... ॥ 262

न कदापि पुरा कृतं मया
विधिवत्केवलमीशसेवनम् ।
यदि तत्कृतम् .... .... ॥ 263

न कदापि पुरा कृतं मया
विधिवत्केवलमीशवीक्षणम् ।
यदि तत्कृतं .... .... ॥ 264

विहितं विधिवद्विभूतिधारणं
कृतमित्युक्तमिदं त्वयाधुना ।

विधिवन्न विभूतिधारणं
कृतमेवेत्यनुमीयते मया ॥ 265

अधुनापि विभूतिधारणं
विधिवत्कर्तुमशक्यमेव हि ।
न यतोऽधिगतो विभूतिधारणे
विबुधैरप्यतिविस्तृतो विधिः ॥ 266

क्रियते हि कथञ्चिदेव त
द्विहितं केवलभस्मधारणम् ।
भवदादिभिरप्यनुक्षणं
विधिसंरक्षणदक्षमानसैः ॥ 267

विधिनापि कृतं न वस्तुतो
विधिवत्केवलभस्मधारणम् ।
यदि तेन कृतं तथा तदा
कथितं मुक्तिमवाप तत्क्षणे ॥ 268

विविधामितपुण्यपूरणे
दृढभक्तिर्भवनाशकारणे ।
भवति त्रिपुरारिभूषणे
सततं केवलभस्मधारणे ॥ 269

धृतकेवलभस्मभूषणो
यदि शम्भुं धृतभस्मभूषणम् ।
विषयानपहाय चिन्तयेत्-
क्षणमात्रं क्वत एव सर्वदा (क्व तदा भयं यमात्) ॥

बहुजन्मकृतैरनाहृतैः
सुकृतैः केवलभस्मधारणे ।
समुदेति यतिः श्रुतिश्रुतेः
सततं देवमतानुवर्तिनाम् ॥ 271

सितकेवलभस्मधारिणा-
मधिकारः शिवलिङ्गभूषणे ।
अत एव तदर्चितः शिवः
वितरत्येव तदीप्सितं फलम् ॥ 272

सितकेवलभस्मधारणं
विधिवद्दूरि विधाय सादरम् ।
सततं शिवनिष्ठचेतसां
तनुबन्धः क्व तदातिदुःखदः ॥ 273

कपिलाद्या महासिद्धा नार्मदं लिङ्गमुत्तमम् ।
सम्पूज्य सिद्धिमापन्नाः सितभस्मविभूषणाः ॥ 274

देवैर्देवर्षिभिः सिद्धैः अन्यैश्च मुनिपुङ्गवैः ।
नार्मदादीनि लिङ्गानि पूजितानि मुमुक्षुभिः ॥ 275

मृन्मयं लिङ्गमभ्यर्च्य पुरा लक्ष्मीः प्रयत्नतः ।
जाता सौभाग्यसम्पन्ना महादेवप्रसादतः ॥ 276

शीघ्रमिष्टार्थदं श्रौतं मृत्तिकालिङ्गपूजनम् ।
तदायुर्वृद्धिदं नित्यं भुक्तिमुक्तिप्रदं च तत् ॥ 277

यावन्मृद्रेणुरचितं पार्थिवं लिङ्गमुत्तमम् ।
तावन्त्यघानि नश्यन्ति तन्मृल्लिङ्गार्चनान्मुने ॥ 278

मृन्मयं लिङ्गमभ्यर्च्य सर्वदा कामदं शुभम् ।
सर्वदुःखहरं पुण्यं श्रौतापवर्गदम् ॥ 279

मृन्मयं लिङ्गमभ्यर्च्य पुरा ब्रह्मादयः सुराः ।
स्वस्वेप्सितं समासाद्य बभूवुः सुखिनो मुने ॥ 280

येन मृन्मयलिङ्गस्य क्रियते साङ्गमर्चनम् ।
सद्यः सम्प्राप्यते तेन सौभाग्यमतुलं ध्रुवम् ॥ 881

दधीचिः (उवाच)–

इति तद्वचनं श्रुत्वा भूरिभक्तिप्रवर्धकम् ।
अगस्त्यस्तं प्रणम्याह सनातनमुनिं तदा ॥ 282

अगस्त्यः (उवाच) -

धन्योऽसि कृतकृत्योऽसि शिवभक्तोऽसि यन्मुने ।
शङ्करानुगृहीतानां शिवे भक्तिः प्रजायते ॥ 283

श्रुतिश्रद्धा तवातीव यतः शिवमयो ह्यसि ।
भक्तिरन्यादृशी शम्भौ यतस्तेऽस्ति सनातन ॥ 284

ततस्ते शिवलिङ्गानां माहात्म्यं प्रवदाम्यहम् ।
शिवलिङ्गेषु सर्वेषु रसलिङ्गमनुत्तमम् ।
तत्र सम्पूजितः शम्भुः प्रसीदति न संशयः ॥ 285

[1]रसलिङ्गे महादेवं सम्पूज्यान्वहमादरात् ।
भुक्त्वा भोगानिहान्ते च शिवं प्राप्नोत्यसंशयम् ॥ 286

---

1. சிவலிங்க வகைகள் :- ரஸலிங்கம் மிகமிகவுயர்ந்தது. இவ்வுலகில் எல்லா இன்பமும், பரத்தில் முக்திநிலையும் பெறலாம். தங்கம், வெள்ளியாலான லிங்க பூஜையால் பாபங்கள் விலகும். குங்குமப் பூவினால் அமைக்கப்பட்ட லிங்கபூஜை திருமாலுக்கு லக்ஷ்மீ லாபத்தை அளித்தது மரகதலிங்க பூஜையால் ப்ரம்மதேவன் படைப்புத் தொழிலுக்கு அதிபதியானார். ஸ்வர்ணலிங்கத்தைப் பூஜித்த இந்திரனுக்கு வானுலகை ஆளும்தகுதி திரும்பக் கிடைத்தது, பவழ லிங்கம் யோகிகளால் பூஜிக்கத்தக்கது. யோகசித்தி பெறலாம்.

हैमरौप्यादिलिङ्गेषु सम्पूज्य परमेश्वरम् ।
सर्वपापविनिर्मुक्ताः प्रयान्ति शिवमन्दिरम् ॥ 287

काश्मीरलिङ्गममलं पुरा विष्णुर्यथाविधि ।
पूजयित्वा परामृद्धिं लक्ष्मीं चावाप शोभनाम् ॥ 288

विधिर्मरकते लिङ्गे समभ्यर्च्य महेश्वरम् ।
सृष्टिकर्ताऽभवत्पूर्वं महादेवप्रसादतः ॥ 289

हेमलिङ्गं समभ्यर्च्य महादेवं शचीपतिः ।
वृत्त्रं हत्वा विना यत्नात्स्वर्गं प्राप पुनर्मुदा ॥ 290

वैद्रुमं लिङ्गमभ्यर्च्य योगसिध्यर्थमादरात् ।
योगिनो योगसम्पन्ना जाता भस्मविभूषणाः ॥ 291

पुरा वज्रं समादाय वज्री पर्वतशासनः ।
गिरिपक्षच्छेदनार्थमुक्तः स प्रययौ गिरीन् ॥ 292

तमायातं समालोक्य मैनाको हिमवत्प्रियः (त्सुतः) ।
हिमवन्तं प्रणम्याह विनयानतकन्धरः ॥ 293

**मैनाक उवाच -**

शैलपक्षच्छेदनार्यं वज्रपाणिः समुद्यतः ।
किं कर्तव्यं मया स्वामिन् भवता च वदस्व मे ॥ 294

कमद्य शरणं यामः कः शरण्यः सुखप्रदः ।
कः पूजितो वज्रघातादस्मान्संरक्षयिष्यति ॥ 295

अगस्त्यः (उवाच) -

इति पुत्रवचः श्रुत्वा हिमवान्शिवपूजकः ।
पुत्रं प्रत्याह वचनं सर्वदुःखविनाशकम् ॥ 296

हिमवानुवाच -

दुःखं मा कुरु पुत्र त्वं त्यज वज्रोद्भवं भयम् ।
सर्वदुःखनिवृत्त्यर्थं शङ्करं शरणं व्रज ॥ 297

कथं वज्राद्भयं भावि शिवार्चनपरस्य ते ।
न भयं शिवभक्तानां स्वप्नेऽपि प्रलयेऽपि वा ॥ 298

वयं शिवैकशरणास्ततोऽस्माकं सदाशिवः ।
शुभप्रदः शुभाकारो दास्यत्येव शुभानि नः ॥ 299

क्व भयं शाम्भवानां नः वज्रिणश्चक्रिणोऽपि वा ।
कालमृत्योरपि भयं नास्माकं विद्यते सुत ॥ 300

शरणं यान्ति ये नित्यं महादेवमुमापतिम् ।
दुःखानि न भविष्यन्ति तेषां स्वप्नेऽपि सर्वथा ॥ 301

तावदेव हि दुःखानि विविधानि शरीरिणाम् ।
यावन्नाराध्यते भक्त्या भगवानम्बिकापतिः ॥ 302

पूजयित्वापि गौरीशं यदि दुःखमवाप्यते ।
वेदाः प्रमाणमिति धीः प्रमारूपा कथं भवेत् ॥ 303

अस्ताद्रेर्यद्युदेत्यर्कस्तदापि शिवपूजकः ।
न प्राप्नोत्येव दुःखानि स्वप्नेऽपीति मतिर्मम ॥ 304

लोके शिवार्चनादन्यन्नास्ति शोकविनाशकम् ।
सत्यमेतत्पुनः सत्यमुद्धृत्य भुजमुच्यते ॥ 305

सर्वं पापकृतः पापं विनश्यति शिवार्चनात् ।
नष्टे पापे कुतः शोकः नानापातकहेतुकः ॥ 306

न भविष्यति विश्वासो येषामीश्वरपूजने ।
तेषां बहूनि पापानि भविष्यन्ति न संशयः ॥ 307

येषामीश्वरपूजायां विश्वासः सततं भवेत् ।
सदा तेषां भविष्यन्ति शोभनानि सुखानि च ॥ 308

अत एव महादेवं सर्वलोकमहेश्वरम् ।
पूजयन्त्यतियत्नेन मुनयो दुःखनाशकम् ॥ 309

हृदि क्षणं क्षणार्धं वा ध्यायेद्यः पार्वतीपतिम् ।
स नाप्नोत्येव दुःखानि कदाचिदपि सर्वथा ॥ 310

महेशध्यानममलं दुःखारण्यदवानलः ।
सत्यमेतत्पुनः सत्यं सत्यमेव न संशयः ॥ 311

महेशस्मृतिमात्रेण महापातककोटयः ।
नश्यन्ति दुःखदाः सद्यः शलभा इव वह्निगाः ।। 312

महाप्रलयकाले वा घोरायां वा महापदि ।
न प्राप्नुवन्ति दुःखानि शिवार्चनपराः सुत ।। 313

कर्मणा मनसा वाचा शिवमभ्यर्चयन्ति ये ।
तेषां शुभप्रदः सद्यः प्रसीदति महेश्वरः ।। 314

यमादपि न भीस्तेषां येषां भक्तिर्महेश्वरे ।
भक्तिर्माहेश्वरी यस्मात्सर्वसौभाग्यदायिनी ।। 315

धन्यास्ते कृतपुण्यास्ते कृतार्थास्ते सदा प्रिये ।
स्तुवन्ति पार्वतीनाथं पूजयन्ति च सादरम् ।। 316

ये पूजयन्ति विधिवत् कीर्तयन्ति च शङ्करम् ।
तेषां हृदि महादेवः शुभदस्तिष्ठति ध्रुवम् ।। 317

त्वमप्यत्यन्तयत्नेन लिङ्गमूर्नि महेश्वरम् ।
सर्वदुःखविनाशार्थं पूजयस्व विधानतः ।। 318

कुरुष्व मृण्मयं लिङ्गं तस्मिन्पूजय शङ्करम् ।
तत्र सम्पूजितः शम्भुः सद्यस्तुष्टो भविष्यति ।। 319

स सन्तुष्टो महादेवो ददात्येव सुखं सदा ।
अदेयं शिवभक्ताय महेशाय न विद्यते ।। 320

विष्णुत्वं यो ददौ विष्णोर्विष्णुनेत्रार्चितः शिवः ।
स सर्वदा सुखं तुभ्यं पूजितः सम्प्रयच्छति ॥ 321

ब्रह्मणा योऽर्चितः साम्बो ब्रह्मत्वं ब्रह्मणे ददौ ।
स सर्वदा .... .... ॥ 322

इन्द्रार्चितो य इन्द्राय प्रादादिन्द्रत्वमीश्वरः ।
स सर्वदा .... .... ॥ 323

ऋषिभिः पूजितः शम्भुस्तेभ्यो मोक्षं ददौ शिवः ।
स सर्वदा सुखं तुभ्यं पूजितः संप्रयच्छति ॥ 324

अपारकरुणासिन्धुर्जगदापन्निवारकः ।
न हरिष्यति किं शोकं तव पुत्र स शङ्करः ॥ 325

दधीचिरुवाच -

इत्युक्तं तद्वचः श्रुत्वा मैनाकः प्रीतमानसः ।
कृताञ्जलिपुटो भूत्वा पितरं प्राह भूपते ॥ 326

मृत्तिकालिङ्गपूजाया विधानं वद भोः पितः ।
यल्लिङ्गपूजया सद्यः प्रसीदति महेश्वरः ॥ 327

किं वा पूजोपकरणं को वा मन्त्रः समर्चने ।
अर्चकस्यापि नियमः को वा तन्मे वदाधुना ॥ 328

इति तद्वचनं श्रुत्वा हिमवानपि हृष्टधीः ।
मृत्तिकालिङ्गपूजाया विधिं वक्तुं प्रचक्रमे ॥ 329

हिमवानुवाच -

कृत्वा शौचादिकं सर्वमुषसि स्नानमाचरेत् ।
निमज्जा(ज्या)म्भसि गौरीशस्मरणं च समाचरेत् ॥ 330

सद्योजातादिमन्त्रेण समाप्तिर्यावदाभवेत् ।
तावत्स्मृत्वैव तान्मन्त्रान् स्मर्तव्यः पार्वतीपतिः ॥ 331

परिधाय ततो वस्त्रं कृत्वा चोद्धूलनं ततः ।
त्रिपुण्ड्रधारणं कृत्वा कार्यं रुद्राक्षधारणम् ॥ 332

अङ्गप्रत्यङ्गभागेषु भस्मयोगो यथा तथा ।
उद्धूलनं प्रयत्नेन कर्तव्यं शिवपूजकैः ॥ 333

ततः सन्ध्यां विधायैव शुद्धे क्षेत्रे निवे(वि)श्य च ।
ऊर्ध्वाधःसंस्कृते स्थाने संविशेद्व्याघ्रचर्मणि ॥ 334

ततः शम्भोराज्ञयेति सङ्कल्पं च समाचरेत् ।
विधेयश्च स सङ्कल्पः प्राणायामपुरःसरम् ॥ 335

पञ्चाक्षरेण मन्त्रेण वैदिकैः श्रुतितत्परैः ।
मृत्तिकाहरणादीनि कर्तव्यानि प्रयत्नतः ॥ 336

पञ्चाक्षरेण मन्त्रेण मृदं सङ्गृह्य पाणिना ।
पात्रे संस्थापनीया सा मृत्तेन मनुना सुत ।। 337

पञ्चाक्षरं समुच्चार्य गृहीत्वा जलमुत्तमम् ।
सा मृत्तिका प्रोक्षणीया तेनैव मनुना द्विजैः ।। 338

कार्यं पञ्चाक्षरेणैव मन्मयं लिङ्गमुत्तमम् ।
लिङ्गपीठं तु कर्तव्यं सद्योजातादिभिः सुत ।। 339

सुवर्तुलं वृत्तकण्ठमनुन्नतमनावृतम् ।
कूर्मपीठसमं चैव लिङ्गपीठं श्रुतिश्रुतम् ।। 340

विद्युद्गोमुखवत्पीठमेकं कृत्वा प्रयत्नतः ।
शिवलिङ्गं योजनीयं नर्स्मिस्तन्मन्त्रपूर्वकम् ।। 341

सद्योजातादिभिर्मन्त्रैः शिवपञ्चाक्षरेण च ।
प्रतिष्ठा तत्र कर्तव्या शिवलिङ्गस्य वैदिकैः ।। 342

सद्योजातादिभिर्मन्त्रैर्ध्यात्वा देवं महेश्वरम् ।
तैरेवावाहनं कार्यं तस्मिन्लिङ्गे शिवात्मके ।। 343

आसनाद्युपचाराश्च तैरेव मनुभिः सुत ।
पञ्चाक्षरान्विताः कार्याः वैदिकैः सावधानतः ।। 344

पूजा तु शिवलिङ्गस्य पञ्चाक्षरपुरःसरम् ।
नमः सोमेति मन्त्रेण शान्तेन मनसा चरेत् ।। 345

पञ्चाक्षरः स्वतः शुद्धः सर्ववेदशिरोमणिः ।
ततस्तेन ससोमेन कर्तव्यं शिवपूजनम् ॥ 346

पञ्चाक्षरेण शुद्धेन योऽर्चयेद्गिरिजापतिम् ।
स तीर्त्वा घोरसंसारं शिवसायुज्यमाप्नुयात् ॥ 347

अभिषिच्य महादेवं रुद्राध्यायेन सादरम् ।
ससोमशिवमन्त्रेण पूजनीयो महेश्वरः ॥ 348

पञ्चाक्षरेण सम्पूज्य विल्वपत्रेण शङ्करम् ।
अघोरागाधपापाब्धिं तरत्येव न संशयः ॥ 349

सम्पूज्य गिरिजानाथमखण्डैर्बिल्वपत्रकैः ।
कोटिजन्मार्जितैः पापैः सद्यो मुक्तो भवेद्द्विजः ॥ 350

दूर्वाङ्कुरैर्जलाप्लुष्टैर्धुत्तूरकुसुमान्वितैः ।
सद्रोणकुसुमैर्भक्त्या पार्थिवं लिङ्गमुत्तमम् ॥ 351

यः पूजयति मैनाक सद्यो मुक्तो भवेद्द्विजः ।
दूर्वाङ्कुरैर्जलाप्लुष्टैर्धुत्तूरकुसुमान्वितैः ॥ 352

सद्रोणकुसुमैर्भक्त्या पार्थिवं लिङ्गमर्चय ।
बृहतीकुसुमैर्यस्तु मृन्मयं लिङ्गमर्चयेत् ॥ 353

स महाऋणवन्धेभ्यो मुच्यते नात्र संशयः ।
वत्सरं मृन्मयं लिङ्गं बृहतीकुसुमैर्नवैः ॥ 354

सम्पूज्य कपिलाज्येन नैवेद्यं देयमादरात् ।
पुष्पाणि च प्रदेयानि नित्यं सार्धशतत्रयम् ॥ 355

एवं यः पूजयेद्भक्त्या स कथं ऋणको भवेत् ।
संवृतैरन्यकुसुमैः पूजनीयो महेश्वरः ॥ 356

वृन्तहीनैः पूजनीयो बृहतीकुसुमैः शिवः ।
नीलोत्पलैः समभ्यर्च्य मृन्मयं लिङ्गमुत्तमम् ॥ 357

महानिविपतिर्भूत्वा मुक्तो भवति बन्धनात् ।
जपापुष्पैः समभ्यर्च्य शिवलिङ्गं तु पार्थिवम् ॥ 358

महाव्याधिविनिर्मुक्तो दीर्घायुर्जायते नरः ।
एवं विंशतिलिङ्गानि पार्थिवानि प्रयत्नतः ॥ 359

नित्यं लक्षजपापुष्पैः (समभ्यर्च्य) मासमेकं प्रपूजयेत् ।
श्वेतगोघृतदीपाश्च देयाः शतचतुष्टयम् ॥ 360

सघृतक्षीरनैवेद्यं क्षीरान्नं च प्रकल्पयेत् ।
भोजनीयाः शतं विप्राः स्वाद्वन्नैः षड्रसैः शुभैः ॥ 361

सुवर्णदक्षिणा देया यद्वा कृष्णलकं सुत ।
एवं यः पार्थिवे लिङ्गे पूजां कुर्यात्प्रयत्नतः ॥ 362

स महारोगकोटिभ्यो मुक्तो भवति सर्वथा ।
योऽर्चयेन्मृन्मयं लिङ्गं नवबिल्वदलैः सदा ॥ 363

स सर्वभुवनाधीशो भवत्येव न संशयः ।
मृन्मयं लिङ्गमभ्यर्च्य सत्यलोकाधिपत्यताम् ।। 364

सम्प्राप्य शिवसायुज्यं प्राप्नोत्येव न संशयः ।
मृन्मयं लिङ्गमभ्यर्च्य युद्धार्थं यो गमिष्यति ।। 365

स शत्रुसैन्यं हत्वैव वीरश्रियमवाप्नुयात् ।
योऽर्चयेत्पार्थिवं लिङ्गं भक्त्या नित्यं प्रयत्नतः ।। 366

सद्यः सम्पादयत्येव स दारिद्र्यदरिद्रताम् ।
योऽर्चयेत्पार्थिवं लिङ्गं नित्यं दूर्वासहस्रः(ङ्कुरैर्नवैः) ।। 367

स सर्वविद्यासम्पन्नो गुरुजिच्च भविष्यति ।
मृन्मयं लिङ्गमभ्यर्च्य यं यं काममभीप्सते ।। 368

तं तं काममवाप्नोति सर्वथा सत्यमुच्यते ।
कृत्वा मृन्मयलिङ्गस्य पूजां भक्तिपुरःसरम् ।। 369

प्रार्थयेदञ्जलिं बद्ध्वा मूर्ध्नि भक्तिपुरःसरम् ।
प्रसीद गिरिजानाथ करुणारसवारिधे ।। 370

अनाथनाथ देवेश शरणागतवत्सल ।
तारयस्व महादेव संसाराब्धेरगाधतः ।। 371

कृपानिधान सर्वज्ञ सर्वदेवशिखामणे ।
त्वदीयोऽहं महादेव त्वदन्यं न भजाम्यहम् ।। 372

त्वदन्यं न वदामीश त्वदन्यं न नमाम्यहम् ।
पिता त्वमेव गौरीश माता भ्राता च मे प्रभो ।। 373

सर्वं त्वमेव सर्वस्वं त्वमेव परमेश्वर ।
शृणोमि त्वत्कथामेव शम्भो सर्वश्रुतिश्रुताम् ।। 374

तवैव नाम वक्ष्यामि भुक्तिमुक्तिप्रदायकम् ।
भवन्तमेव सततं पूजयामि सदाशिव ।। 375

त्वत्पादपद्मप्रणतं (प्रवणं) चित्तमस्तु मम प्रभो ।
त्वय्येव सर्वभावेन चित्तमस्तु महेश्वर ।। 376

नान्यत्र यायात् (यातु) मच्चित्तं त्वदन्यत्र (त्वां विहाय) महेश्वर ।
इति सम्प्रार्थ्य देवेशं जप्यः पञ्चाक्षरस्ततः (रो मनुः) ।।

कार्यः पञ्चाक्षरेणैव न्यासः पञ्चाक्षरस्य तु ।
अङ्गप्रत्यङ्गदेशेषु न्यासः पञ्चाक्षरैर्द्विजैः ।। 378

कार्यस्ततः प्रयत्नेन पञ्चाक्षरजपो द्विजैः ।
पञ्चाक्षरजपे श्रद्धां विधाय स्वगुरुं स्मरन् ।। 379

अष्टोत्तरसहस्रं तु कार्यः पूजोत्तरं जपः ।
पञ्चाक्षरसमो मन्त्रो नास्ति दैवेषु सर्वथा ।। 380

पञ्चाक्षरजपे श्रद्धा बहुपुण्यतपःफलम् ।
वेदालङ्काररूपोऽयं शैवः पञ्चाक्षरः स्मृतः ।। 381

ततस्तस्य जपे श्रद्धा नाल्पस्य तपसः फलम् ।
पुरोङ्कारमुनेः पुत्रो वेदसार इति स्मृतः ।। 382

स महादेवमेवैकं पूजयामास सादरम् ।
शिवनामाङ्कितानेव वेदभागान्प्रयत्नतः ।। 383

स दृष्ट्वा सर्वभावेन महेशं शरणं गतः ।
अक्षराभ्यासकालेऽपि शिवपञ्चाक्षरेतरे ।। 384

वर्णा नोच्चरितास्तेन शिक्षितोऽध्यापकैरपि ।
सदाशिव शिवेत्येव स वदन् संस्थितो मुदा ।। 385

शिवनाम विहायान्यन्नोक्तं नाम तु तेन हि ।
अनुक्षणं बिल्वपत्रैरच्छिद्रैः कोमलैर्नवैः ।। 386

स शिवं पूजयामास पञ्चाक्षरपुरःसरम् ।
सन्ध्यास्नानादिकालेषु सर्वेष्वपि स यत्नतः ।। 387

शिवेत्युच्चार्य कर्माणि निवेदयति शङ्करे ।
कदापि लौकिकी वार्ता न कृता तेन सर्वथा ।। 388

शिवपूजां विना तेन न कदापि स्थितं सुत ।
पूजयित्वा महादेवं स बिल्वैरपि कोमलैः ।। 389

ननर्त शङ्करस्याग्रे शिवनाम वदन् मुदा ।
नारी न वीक्षिता तेन पश्यता सादरं शिवम् ।। 390

शिवान्यस्तेन न ध्यातः प्रमादेनापि सर्वथा ।
संश्रुतं शिवनामैव तेन यत्नपुरःसरम् ॥ 391

उद्धूलनत्रिपुण्ड्राभ्यां रुद्राक्षैश्च विभूषितः ।
शिवनाम जपं कुर्वन्शिवमेव स्मरन्मुदा ॥ 392

तं दृष्ट्वाऽथ सुराः सर्वे विष्णुब्रह्मपुरोगमाः ।
प्रणमन्त्यतियत्नेन पूजयन्ति च शाम्भवम् ॥ 393

तं दृष्ट्वा मुनयः शैवं प्रणमन्ति स्तुवन्ति च ।
स सर्ववन्द्यः समभूच्छ्रीमच्छङ्करपूजया ॥ 394

स तु मृन्मयलिङ्गानि नित्यमेकादशादरात् ।
पूजयामास बिल्वाद्यैस्तेन पूज्यो बभूव सः ॥ 395

महादेवार्चनपरः को वा याति न पूज्यताम् ।
को वा न मुक्तः संसारादसारादघसागरात् ॥ 396

संसारतरणोपायः शिवाराधनमुच्यते ।
सत्यमेतत्सत्यमेतद्विश्वस्यार्चय शङ्करम् ॥ 397

यः श्रद्धया महादेवमाराधयति सादरम् ।
सर्वपापविनिर्मुक्तो मुक्तो भवति संसृतेः ॥ 398

शिवार्चकः सखा येषां तेषामपि न पापधीः ।
साक्षाच्छिवार्चकानां तु कुतः पापभयं भवेत् ॥ 399

शिवार्चको वसेद्यत्र ततो द्वादशयोजनम् ।
मुक्तिक्षेत्रमिति ज्ञेयं वेदवादरतैर्द्विजैः ॥ 400

यथा शिवार्चनान्मुक्तिर्न तथाऽन्येन कर्मणा ।
सत्यमेतत्सत्यमेतदिति जाबालवादिनः ॥ 401

शिवः सर्वप्रयत्नेन सर्वदा सर्वथा द्विजैः ।
पूजनीयोऽवधानेन भुक्तिमुक्तिप्रदायकः ॥ 402

भुक्तिमुक्तिप्रदं देवं महादेवमुमापतिम् ।
पूजयन्त्यतियत्नेन धन्या वेदार्थवादिनः ॥ 403

महेशपूजनान्मुक्तिरनायासेन लभ्यते ।
मोक्षहेतुतयाऽन्यत्तु न श्रुतं श्रुतिषु ध्रुवम् ॥ 404

किमन्यद्बहुनोक्तेन केवलं शिवपूजया ।
नश्यन्ति पापगिरयः संसाराब्धिश्च शुष्यति ॥ 405

दधीचिरुवाच-

इत्युक्तः स तु मैनाकः शुचिर्भूत्वा तदाज्ञया ॥ 406

तदा मृन्मयलिङ्गस्य पूजां कर्तुं समादधे ।
विधाय मृन्मयं लिङ्गं विधिवद्भक्तिपूर्वकम् ॥ 407

पूजयामास यत्नेन बिल्वपत्रादिसाधनैः ।
तदानीमागतं वज्रमिन्द्रेण प्रेषितं नृप ॥ 408

अगस्त्य तं पुनः प्राप मैनाकेन प्रधर्षितम् ।
तदा शचीपतिर्वज्रं निस्तेजस्कं विलोकयन् ॥ 410

दुःखसङ्कुलितः प्राह गुरुं नत्वा कृताञ्जलिः ॥ 411

इन्द्रः (उवाच) -

गुरो वज्रायुधं तीक्ष्णमस्य शक्तिर्गरीयसी ॥ 412

ईदृशं चेदमधुना मैनाके कुण्ठितं कथम् ।
अनेनैव हतः क्रूरः पुरावृत्रासुरो मया ॥ 413

वृत्रासुरसमो नास्ति मम शत्रुर्दुरासदः ।
विन्ध्यादि शैलपक्षाणां छेदोऽनेन कृतो गुरो ॥ 414

अनेनैव(ा)सुराः पूर्वं बहवो निहता मया ।
यदा सुदर्शनं पूर्वं शिवः स्वाङ्गुलिरेखया ॥ 415

ससर्ज सूर्यसङ्काशं तदेदं च ससर्ज हि ।
ततः स देवदेवोऽपि विष्णुनेत्रसमर्चितः ॥ 416

सुदर्शनं ददौ तुष्टो विष्णवे करुणानिधिः ।
ततो मां क्लिष्टवदनं वृत्रासुरतिरस्कृतम् ॥ 417

विलोक्य कृपया मह्यं ददौवज्रमिदं शिवः ।
ततोऽनेनैव वज्रेण हतो वृत्रासुरो गुरो ॥ 418

तदेवखल्विदं वज्रं येन वज्री भवाम्यहम् ।
सुदर्शनस्य सामर्थ्यं यादृशं तादृशं गुरो ॥ 419

अस्याप्यस्त्येव सामर्थ्यं अत्रनास्त्येव संशयः ।
तथा च सति सामर्थ्यमस्यासीत्कुण्ठितं कथम् ॥ 420

अस्य चेत्कुण्ठिताशक्तिः कुण्ठिताशक्तिरस्ति मे ।
यमाच्च तदधीनं मे जीवनं शिवकल्पितम् ॥ 421

अस्य चेत्कुण्ठिता शक्तिर्जीवनं मे कथं भवेत् ।
इति तद्वचनं श्रुत्वा गुरुरर्चितशङ्करः ॥ 422

ज्ञातमैनाकवृत्तान्तः शचीनाथमुवाच सः ॥ 423

बृहस्पतिरुवाच -

मैनाकः शोकनाशार्थं सर्वशोकनिवारकम् ।
शङ्करं हिमवद्वाक्यादाराधयति सादरम् ॥ 424

स कृत्वा मृन्मयं लिङ्गं समर्चयति शङ्करम् ।
ततस्तस्मिन्निदं वज्रमभवत्कुण्ठितं ध्रुवम् ॥ 425

शिवार्चकेषु वज्रस्यशक्तिर्न प्रसरिष्यति ।
वज्रमेतद्यतः शैवं ततः शैवेन तुष्यति ॥ 426

यतः सुदर्शनादीनां महास्त्राणामपि प्रभा ।
न प्रधृष्यति शैवेन्द्रानिन्द्रेदं किं पुनर्वद ॥ 427

सुदर्शनादि शस्त्राणि प्रयुक्तान्यपि शाङ्करे ।
प्रसूनानीव शैवेषु दुःखाय न भवन्ति हि ।। 428

यवसोन्नयने वायुः समर्थं इति पर्वतान् ।
किमुन्नेतुं समर्थः स्यात्तद्वदस्व शचीपते ।। 429

सुदर्शनादिशस्त्राणि शैवान्यासन् स्वशक्तितः ।
अशैवान्नाशयिष्यन्ति शैवानपि कथं वद ।। 430

गृध्रो यदि समर्थःस्यात् नागनायक भक्षणे ।
तदा सुदर्शनादीनि चालयन्तु शिवार्चकान् ।। 431

शैवे वज्रप्रयोगोऽयमज्ञात्वैव त्वया कृतः ।
शैवे शस्त्रप्रयोगस्तु केनापि न कृतः पुरा ।। 432

शैवानां दुःखदानार्थमुद्योगं यः करिष्यति ।
स याति नरकं घोरं यावदाचन्द्रतारकम् ।। 433

न विभेत्यशनेः शैवः कालाग्नेः प्रलयादपि ।
स तादृश शिवरतो वज्रादस्माद्बिभेतिकिम् ।। 434

स समर्थो वज्रमेतच्चूर्णीकर्तं तथा तु सः ।
न चूर्णीकृतवानिन्द्र कृपयैव हि केवलम् ।। 435

विष्णुमैनाकयोः पूर्वं हिमवद्गिरिगह्वरे ।
वृथावाक्कलहोजातस्तेन वैरमभूत्तयोः ।। 436

विष्णुनोक्तमहं श्रेष्ठोमदन्योनेति मोहतः ।
उत्कृष्टः शिव एवेति मैनाकः सतदाब्रवीत् ॥ 437

तदा विष्णुर्महामोहवशगो विवशोऽब्रवीत् ।
अधिकोऽहं नाधिकोऽन्यः सत्यमेतदितिभ्रमात् ॥ 438

विश्वधिको रुद्र एवेत्यब्रवीद्धिमवांस्तत(मवत्सुतः) ।
एवमुक्त्वा स मैनाकस्ततो विष्णुमभर्त्संयत् ॥ 439

तदैवासहमानस्तं तदुत्कर्षं शिवार्चकः ।
क्रोध किं शुकतुल्याक्षो बभाषे तं जनार्दनम् ॥ 440

**मैनाक उवाच -**

यस्त्र्यक्षः श्रीमहादेवः सर्वदेवशिखामणिः ।
तद्भृत्यभृत्य तुल्योऽपि न नूनं त्वं जनार्दन ॥ 441

गणना कुत्र मे विष्णो गणनीयोऽस्ति किं भवान् ।
महेशान्नत्वमुत्कृष्टो महेशेन समोऽपि वा ॥ 442

अनोरणीयान्महतो महीयांस्त्रिपुरान्तकः ।
तादृशाच्छ्री महादेवादधिकस्त्वं कथं हरे ॥ 443

परमाणुर्यथात्यल्पो वस्तुतोमेर्वपेक्षया ।
तथा जनार्दनाल्पोऽसि त्वमुमापत्यपेक्षया ॥ 444

गुरुरुवाच -

स मैनाकस्तमुक्त्वैवं विष्णुं स्वोत्कर्षवादिनम् ।
पातयित्वाऽऽशुविक्रोधाद्धर्षयामास पादतः ।। 445

तत्पाद घर्षणेनैव विष्णुः कृष्णत्वमागतः ।
तदा प्रभृति तं प्राहुः कृष्ण इत्यखिलाजनाः ।। 446

मैनाकपादयोगेन गतमोहो जनार्दनः ।
मैनाकं सत्वरं नत्वा तमाहविनयानतः ।। 447

विष्णुरुवाच -

उत्कृष्टः शिव एवेति त्वयोक्तं हिमवत्सुत ।
तत्तथैव न सन्देहो वेदोऽप्याह तथा यतः ।। 448

वैदैर्विश्वाधिकत्वेन श्रीरुद्रः प्रतिपादितः ।
यतो विश्वाधिको रुद्र इति वाक्यं श्रुतिश्रुतम् ।। 449

श्रीमहादेवदुग्धाब्धौ विष्णुब्रह्मादयः सुराः ।
शीकरा इति जाबालो वदत्येव मुहुर्मुहुः ।। 450

मयाद्य भ्रान्तचित्तेनह्यात्मन्युत्कृत्वमीरितम् ।
मयाद्यप्रकृतिस्थेनज्ञाता स्वाभाविकीस्थितिः ।। 451

मह्यं याद्य कृता शिक्षा त्वया मैनाक शाम्भव ।
सा शिक्षावस्तुतो ज्ञाता मयैवाद्य सुखावहा ।। 452

यथा सुतं पितोन्मत्तं शिक्षयत्यक्षिकादिभिः ।
तथाऽधुना भ्रान्तचित्ते मयि शिक्षात्वया कृता ॥ 453

मैनाक त्वत्पदद्वन्द्वयोगेनैव ममाऽधुना ।
भ्रान्तिर्गता यथाभ्रान्तिः कथं त्यक्ष्यति शाश्वतम् ॥ 454

सर्वाङ्गोद्धोलनं भस्मसङ्गतं चरणद्वये ।
ताभ्यां च सङ्गमोदव मोहोमेऽद्यगतो ध्रुवम् ॥ 455

महान्ममोपकारोऽयं मैनाकाद्य त्वया कृतः ।
नास्ति प्रत्युपकारोऽस्य वस्तुतः सत्यमुच्यते ॥ 456

भ्रान्त्या यदि शिवोत्कर्षं न वदिष्याम्यहं तदा ।
कुरुशिक्षां ममैव त्वं वरोऽयं मम शाम्भव ॥ 457

अन्यथा भ्रान्तचित्तेन मयाचेद्वलगनं रुतम् ।
तदाग्रे यातना घोरा भविष्यति मम ध्रुवम् ॥ 458

प्रायश्चित्तं सुनिर्वृत्तंमद्यत्वत्कृत शिक्षया ।
अतः परं मदुत्कर्षवादजं पातकं न मे ॥ 459

**गुरुरुवाच -**

इत्युक्त्वा शाम्भश्रेष्ठं मैनाकं शङ्करप्रियम् ।
मन्दारपुष्पैः सम्पूज्य ययौ नत्वा जनार्दनः ॥ 460

इन्द्रातस्तादृशे शस्ते मैनाके शाम्भवोत्तमे ।
त्वत्प्रेरितमिदं वज्रं लगिष्यति कथं वद ।। 461

वज्रं किमितितेनेदं नैवचूर्णी कृतं तदा ।
न जाने स यतः पादपादघर्षितमाधवः ।। 462

शक्तिः शाम्भमात्रस्याप्यस्यैवैतादृशी तदा ।
शक्तिरस्तीदृशीतस्मिन् मैनाक इति नाद्भुतम् ।। 463

माधवं प्रणतं दृष्ट्वा स मैनाकः कृपानिधि ।
तंतत्याजान्यथा सद्यस्तं हन्यादेव माधवम् ।। 464

न त्यक्ष्यत्येव मैनाको भवन्तं मत्तमीदृशम् ।
त्वया तद्धननं कर्तुं वज्रं सम्प्रेषितं यतः ।। 465

अन्यादृशं न जानीहि मैनाकं जाम्बवोत्तमम् ।
स तादृशो न मैनाको यस्तूष्णींवर्ततेऽधुना ।। 466

बलं तेन महत्प्राप्तं मृत्तिकालिङ्गपूजया ।
स चेत्क्रुद्धो जगत्सर्वं नाशयिष्यति सत्वरम् ।। 467

यत्पातघर्षणात्सद्यो विष्णुः कृष्णत्वमाप्तवान् ।
स मैनाकोऽतिदुर्धर्षो न भविष्यति किं वद ।। 468

शिवार्चन प्रसङ्गेन स तिष्ठत्यधुना ध्रुवम् ।
तस्मिन्समाप्ते मैनाकस्तव शिक्षांकरिष्यति ।। 469

इन्द्राधुनैव मैनाकं शरणं यासिचेत्तदा ।
स मैनाकः कृपासिन्धुर्भवन्तं पालयिष्यति ।। 470

अन्यथाद्यैव मैनाको भवन्तमति वीर्यवान् ।
हत्वान्यस्मै स्वर्गलोकं दापयिष्यति शङ्करात् ।। 471

अगस्त्यः (उवाच) -

इन्तीन्द्रस्तद्वचः श्रुत्वा मैनाक शरण गतः ।
पालयामास मैनाकस्तमिन्द्रं शरणागतम् ।। 472

मैनाकेनेदृशीशक्तिः प्राप्ता मृल्लिङ्गपूजनात् ।
मृल्लिङ्गपूजनं यस्मात्सर्वाभीष्टप्रदायकम् ।। 473

मृल्लिङ्गपूजनात्पूर्वं बहवो ब्रह्मवादिनः ।
तत्वज्ञानं परं प्राप्य शिवं प्रापुः शिवाज्ञया ।। 474

सर्वश्रुतिश्रुतं पुण्यं सर्वसम्पत्प्रवर्धकम् ।
आरोग्यदं पुष्टिदं च धर्म्यं मृल्लिङ्गपूजनम् ।। 475

मृल्लिङ्गपूजनादन्यन्नाति सर्वेप्सितार्थदम् ।
सत्यमित्याह भगवान् नन्दिकेशाय शङ्करः ।। 476

मृल्लिङ्गपूजनं श्रौतं सदास्वाभीप्सितार्थदम् ।
सत्यं सत्यमिति प्राह मङ्गलापि सुमङ्गला ।। 477

रत्नलिङ्गादपि श्रेष्ठं मृन्मयं लिङ्गमुच्यते ।
ततोऽधिकं नार्मदं स्यात् रसजं च ततोऽधिकम् ॥ 477

पुरारेवातटे पुण्ये मौद्‌गल्यो मुनिपुङ्गवः ।
जाबालश्रुति तत्वज्ञ शिवपूजापरः स्थितः ॥ 478

उद्धूलनत्रिपुण्ड्राभ्यां रुद्राक्षैश्च विभूषितः ।
श्रीरुद्रजपसंसक्तः पञ्चाक्षरजपप्रियः ॥ 479

सदाशिवकथामेव सदाशृण्वन्विलोकयन् ।
शिवलिङ्ग समभ्यर्च मोदमानः स्थितःसदा ॥ 480

तं तादृशं शिवरतं दृष्ट्वा रेवानिवसिनः ।
प्रणम्य विनया नम्राः पप्रच्छुर्धर्म संहितम् ॥ 481

ऋषयः ऊचुः

मौद्‌गल्य मुनिशार्दूल वेदतत्वज्ञसत्तम ।
भुक्ति प्रदान्त्सर्वान्वद कारुणिकोत्तम ॥ 482

क्व वा महेश सन्निन्ध्यं विशेषेणाधितिष्ठति ।
क्व वा महेश्वरो नित्यं पूजितो भुक्तिमुक्तिदः ॥ 483

किं वा महेशपूजायां साधनं श्रुति सम्मतम् ।
एतत्सर्वं त्रिशेषेण वद मौनिशिरोमणे ॥ 484

मौद्गल्य उवाच -

धन्या यूयं धर्मनिष्ठा भूतिभूषितविग्रहाः ।
रेवायां लिङ्गरूपिण्यां भवद्भिः स्थीयते यतः ।। 485

शिवलिङ्गमयीरेवा महेशस्य परा तनुः ।
शिवोनार्मदलिङ्गेषु सर्वदाप्यधि तिष्ठति 486

लिङ्गरूपी महादेवः शिवलिङ्गे समर्चितः ।
ददाति महदैश्वर्यं मोक्षं चान्ते द्विजोत्तमाः ।। 487

नानाविधानि लिङ्गानि तान्युच्यन्ते मयाधुना ।
गोमेदकाख्यमस्त्येकं लिङ्गं शङ्करसम्मतम् ।। 488

वैद्रुमं लिङ्गमस्त्येकं पद्मरागमयं तथा ।
वज्रवैडूर्यलिङ्गानि तथा धातुमयानि च ।। 489

काश्मीरलिङ्गमस्त्येकं स्फाटिकं लिङ्गमस्ति च ।
अन्नलिङ्गं धान्यलिङ्गं लिङ्गं गोमयनिर्मितम् ।। 490

लावणं लिङ्गमस्त्येकं फलदारुमयं तथा ।
भस्मना रचितं लिङ्गं मृन्मयं लिङ्गमस्ति च ।। 491

नर्मदाजलसम्भूतं लिङ्गमेकं मुनीश्वराः ।
शिलाजन्यं रसोत्पन्नं लिङ्गं जाबालचोदितम् ।। 492

लिङ्गेष्वेतेषु सर्वेषु लिङ्गत्रयमनुत्तमम् ।
तत्र सम्पूजितः शम्भुः प्रसीदति न संशयः ॥ 493

मृद्बाणरसलिङ्गानि श्रेष्ठान्येतेषु वस्तुतः ।
त्रिष्वाद्याद्बाणमुत्कृष्टं रसलिङ्गं ततोऽधिकम् ॥ 494

विद्युद्गोमुखवत्कार्यं मृन्मयं लिङ्गमुत्तमम् ।
एवमन्यानि लिङ्गानि कर्तव्यानि मनीषिभिः ॥ 495

वक्ष्येऽहं बाणलिङ्गस्य लक्षणं श्रुतिचोदितम् ।
वाणलिङ्ग श्रुतिप्रोक्तं तल्लक्षणमपि द्विजाः ॥ 496

त्रिपञ्चसप्तधा यत्तु तुलातुलितमास्तिकाः ।
न याति समतां तत्तु बाणलिङ्गमिति श्रुतम् ॥ 497

सपीठमस्त्वपीठं वा बाणलिङ्गं शिवात्मकम् ।
पूजनीयं प्रयत्नेन भुक्तिमुक्तिफलेप्सुभिः ॥ 498

न प्रतिष्टाद्यपेक्षापि बाणलिङ्गस्य वस्तुतः ।
यतः कुतश्चिदानीय बाणलिङ्गं प्रपूजयेत् ॥ 499

नर्मदे नर्मदालिङ्गे निवसाम्यहमन्वहम् ।
सन्देहं मा कुरुष्वेति प्राह शम्भुर्यतः पुरा ॥ 50C

शिवलिङ्ग सहस्राणां पूजया यत्फलं लभेत् (भवेत्) ।
ततः शतगुणं पुण्यं रत्नलिङ्गस्य पूजनं (नात्) ॥ 501

गोमेदकानि लिङ्गानि रत्नलिङ्गानि सुव्रताः ।
रत्नलिङ्गसहस्राणां पूजया यत्फलं लभेत् (भवेत्) ।। 502

ततः शतगुणं पुण्यं धातुलिङ्गस्य पूजने ।
धातुलिङ्गेष्वपि श्रेष्ठं हेमलिङ्गं श्रुतिश्रुतम् ।। 503

तत्र सम्पूजितः शम्भुः प्रसीदति न संशयः ।
धातुलिङ्ग सहस्राणां पूजया यत्फलं भवेत् ।। 504

ततः शतगुणं पुण्यं मृत्तिकालिङ्ग पूजने ।
मृल्लिङ्गानां सहस्रस्य पूजया यत्फलं लभेत् (भवेत्) ।। 505

ततः शतगुणं पुण्यं बाणलिङ्गस्य पूजने ।
अनन्तबाणलिङ्गानां पूजया यत्फलं भवेत् । (लभेत्) ।।

ततोऽनन्तगुणं पुण्यं रसलिङ्गस्य पूजणे ।
रसलिङ्गसमंलिङ्गं नास्ति न श्रूयतेऽपि च ।। 507

रसलिङ्गे शिवः साक्षात्सच्चिदानन्दलक्षणः ।
रसलिङ्गस्य माहात्म्यं जानाति भगवाञ्छिवः ।। 508

तदन्ये न विजानन्ति सत्यं सत्यं न संशयः ।
बहवो मुनयः पूर्वं रसलिङ्गार्चनाद्द्विजाः ।। 509

मोक्षं प्रापुरनायासाद्विना यागादिकर्मभिः ।
शिवास्वयमुमाकान्तं रसलिङ्गस्वरूपिणम् ।। 510

पूजयामास तेनैव प्रसन्नोऽभून्महेश्वरः ।
रसः साक्षान्महादेवो "रसो वै स" इति श्रुतः ॥ 511

अतोरसात्मकं लिङ्गं जाबाले बहुधा श्रुतम् ।
रसः सृष्टोमहेशेन भक्तानुग्रहकाङ्क्षया ॥ 512

तत्कृतं लिङ्गमुत्कृष्टं सर्वाभीष्टफलप्रदम् ।
यं यं कामयते कामं रसलिङ्गस्य पूजया ॥ 513

तं तमाप्नोति विप्रेन्द्राः सत्यं सत्यं न संशयः ।
सर्वलिङ्गोत्तमं पुण्यं रसलिङ्गमनुत्तमम् ॥ 514

ततस्तत्पूजया शम्भुः साक्षात्सम्पूजितो भवेत् ।
रसलिङ्गार्चनं श्रेष्ठं सर्वलिङ्गार्चनादपि । 515

ततस्तदेव यत्नेन पूजनीयं मनीषिभिः ।
रसलिङ्गं यदि भवेत्पूजनीयं तदन्वहम् ॥ 516

तदभावे पूजनीयं बाणलिङ्गं प्रयत्नतः ।
वाणलिङ्गं यदि गृहे न भविष्यति सर्वथा ॥ 517

पूजनीयं प्रयत्नेन मृत्तिकालिङ्गमास्तिकैः ।
तदभावे पूजनीयं धातुलिङ्गं प्रयत्नतः ॥ 518

काश्मीरलिङ्गमभ्यर्च्य तदभावे प्रयत्नतः ।
तदभावे पूजनीयं शिलालिङ्गं प्रयत्नतः ॥ 519

तदभावे पूजनीयं दारुलिङ्गं प्रयत्नतः ।
तदभावे पूजनीयमन्नलिङ्गं प्रयत्नतः ।। 520

तदभावे तु भूत्यादिलिङ्गान्यर्च्यानि यत्नतः ।
यादृशं तादृशं वाऽस्तु शिवलिङ्गं शिवात्मकम् ।। 521

पूजनीयं प्रयत्नेन द्विशैर्वेदोक्तमार्गतः ।
शैवः पञ्चाक्षरो मन्त्रो यः सर्वश्रुनि संश्रुतः ।। 522

तेनैव मन्त्रराजेन पूजनीयो महेश्वरः ।
श्रीमत्पञ्चाक्षरेणैव पूजितः श्रामहेश्वरः ।। 523

ददाति परमामृद्धिं मोक्षं चान्ते न संशयः ।
श्रीमहादेवमाराध्य लिङ्गरूपिणमव्ययम् ।। 524

पञ्चाक्षरेण सम्पूज्य मुक्ताः पूर्वमनन्तशः ।
श्रौतेत मनुनाकार्यं श्रौत लिङ्गार्चन द्विजाः ।। 525

श्रौतोमनुर्मन्त्रराजः शैवः पञ्चाक्षरः स्मृतः ।
वैदिकैर्यत्नतः कार्यं वैदिकं लिङ्गपूजनम् ।। 526

अन्यथा रौरवं याति यावदाचन्द्रतारकम् ।
लिङ्गपूजैव कर्तव्या वैदिकैर्वेदवादिभिः ।। 527

शिवलिङ्गान्यपूजायां वैदिका नाधिकारिणः ।
द्विजाः कलौकरिष्यन्ति शिवलिङ्गान्यपूजनम् ।। 528

ते रौरवं प्रयास्यन्ति सत्यं सत्यं न संशयः ।
यावन्न कलिरायाति तावद्यूयं प्रयत्नतः ॥ 529

शिवलिङ्गार्चनं कृत्वा लभध्वं मुक्तिमास्तिकाः ।
श्रौतं शिवार्चनं यस्मात्कर्तव्यं मुक्तिकाङ्क्षिभिः ॥ 530

श्रौतलिङ्गार्चनत्यागे पतन्ति नरके ध्रुवम् ।
चरलिङ्गानि पूज्यानि स्थावरान्यपि यत्नतः ॥ 531

त्रिकालं स्थावरं लिङ्गं पूजनीयं प्रयत्नतः ।
कृत्वा स्थावरलिङ्गार्चां चरलिङ्गार्चनं विना ॥ 532

भोक्तव्यं स्थावरार्चां तु विना भुञ्जीत न द्विजाः ।
स्थावरं लिङ्गमभ्यर्च्य स्पृष्ट्वा च प्रत्यहं द्विजैः ॥ 533

भोक्तव्यमन्यथा याति नरकं सूतकं विना ।
न यत्र स्थावरंलिङ्गं यत्र स्थातव्यमेव च ॥ 534

यतः स्थावरलिङ्गस्य पूजा नित्यं द्विजन्मनाम् ।
सर्वथा स्थावर लिङ्गं यदि न स्यात्तदा द्विजैः ॥ 535

चरलिङ्गमुपस्पृश्य जप्यो रुद्रोऽष्टधा द्विजैः ।
अथवा नार्मदं लिङ्गमनुलिप्तेऽवनीतले ॥ 536

स्थापयित्वा पूजनीयं शैवेन मनुना द्विजैः ।
पूजान्ते तत्पुनर्ग्राह्यं नार्मदं लिङ्गमास्तिकैः ॥ 537

नीत्वान्यत्रापि संस्थाप्य पूजनीयं पुनः पुनः ।
यदि नार्मदलिङ्गस्याप्यभावः स्यात्तदा द्विजैः ॥ 538

सम्पूज्यं पार्थिवं लिङ्गं स्थापयित्वाऽवनीतले ।
मृल्लिङ्गार्चनमात्रेण स्थावरं लिङ्गमर्चितम् ॥ 539

स्थावरत्वं च मृल्लिङ्गे स्थावरत्वस्य कल्पनात् ।
सद्योजातादिभिर्मन्त्रैः स्थापयित्वा स्थिरोभव ॥ 540

गृहाण पूजामिति च स्थावरत्वं च कल्पयेत् ।
नित्यं बिल्वदलैः कार्यं भस्मना च शिवार्चनम् ॥ 541

धूपदीपादिक सर्वं कल्पनीयं स्वशक्तितः ।
शिवलिङ्गार्चनं पुण्यं भुक्तिदं मुक्तिदं सदा ॥ 542

काशीप्राप्तिकरं चैतत्किं निर्वाणं न यच्छति ।
शिवलिङ्गार्चनाद्विप्राः काशीतत्वं च बुध्यते ॥ 543

तादृशं तद्भुक्तिदं च मुक्तिदं च भविष्यति ।
पुरा पुण्यनिधिर्नाम ब्राह्मणो वेदवित्तमः ॥ 544

शिवार्चक:स्थितस्तस्य माहात्म्यं वेद्म्यहं द्विजाः ।
स विल्वदलपुष्पाद्यैर्भस्मना च महेश्वरम् ॥ 545

रसलिङ्गात्मकं नित्यं पूजयामास सादरम् ।
स नित्यं पूजयामास बाणलिङ्गानि सादरम् ॥ 546

पार्थिवान्यपि लिङ्गानि पूजयामास भक्तितः ।
शिवव्रतानि सर्वाणि स चकार यथाविधि ।। 547

शिवक्षेत्राणि सर्वाणि स ददर्श द्विजोत्तमः ।
शिवार्चनोत्पन्नपुण्यनिधिः पुण्यनिधिर्द्विजः ।। 548

शिवक्षेत्राणि सर्वाणि दृष्ट्वा काशीमवाप च ।
काश्यां ततः स्थितिं चक्रे शैवधर्मपरायणः ।। 549

विश्वेश्वरं वेदवेद्यं पूजयामास सन्ततम् ।
तत्रान्तर्गृह यात्रादि कर्म कृत्वा यथाक्रमम् ।। 550

वायुमात्राशनो भूत्वा विश्वेशार्चापरोऽभवत् ।
एवं स्थितं पुण्यमूर्तिं भृगुः सम्पूज्य सादरम् ।। 551

काशीप्रभावममलं वदस्वेत्यब्रवीद् द्विजाः ।
इति तद्वचन श्रुत्वा पुण्यः पुण्यनिधिः स्थितः ।। 552

काशीप्रभावममलं ज्ञात्वा वक्तुं समारभेत् (प्रचक्रमे) ।।

पुण्यनिधिरुवाच -

काशीत्यस्ति महाक्षेत्रं (महत्स्थलं) श्रुतिशिरोरत्नस्य-
तत्वं मया
न ज्ञात मुनिभिः सुरैरपि परिज्ञातं मुकुन्दादिभिः ।

न ज्ञात श्रुतिभिश्च नैव विदितं सिद्धैश्च वेदेश्वरः
तत्त्वं तच्छिवतत्ववित्तदितरैर्ज्ञेयं कथं तद्भवेत् ।। 554

या काशी हृदि यस्य दीपकलिकेवाभाति तस्यैव सा
विज्ञेया भवति स्फुटं तदितरैर्नज्ञायते सर्वथा ।
सा भात्येवा तथा महेश हृदये या ज्ञायते सा तत-
स्तेनेशेन परात्परेण विभुना विश्वाधिकेन ध्रुवम् ।। 555

यस्यामन्तकभीतिलेशरहिताः कार्तान्तवार्ता विना
निःशङ्कं निवसन्ति सन्ततमुमाक्रान्तार्चकाः शाङ्कराः ।
सेयं पाशुपतस्थले मुनिवरैराराधिता संस्तुता
वेदान्तैः शिवरूपिणीति सततं काशीति काशीति च ।।

यस्यां देहविसर्जने सति महादेवः परं तारकं
व्याचष्टे शिवतत्पराय विलुठत्ससार विच्छित्तये ।
तद्रूपं भगवान्नवेति भगवान् रुद्रस्तदन्यो न वा
यो वै रुद्र इति श्रुतिस्तदितरन्नैवाभिवक्तिध्रुवम् ।। 561

विश्वेशाभिधलिङ्गमेकममलं धृत्वा विमुक्तं सदा
शैवांस्तारयितुं महाघ निचयात्संसारतोऽपीश्वरः ।
मायाजालविशोधनाय सततं साम्बोऽम्बया संस्थितः
काशीतत्वविदुत्तमः शिवतमः सर्वोत्तमः शङ्करः ।। 562

काशी नाम सुधानिधिः सुरगणैः संसेवितः सादरं
जाबालादिसमस्तवेदनिकरैः सम्यक् श्रुतः सन्ततम् ।
नानातीर्थसमन्वितः श्रुतिमतैर्लिङ्गैरनेकैर्वृतः
दृष्टो हन्ति समस्तपातकगणान्ध्यातस्तु निर्वाणदः ।।

काशीत्येव महामनुः श्रुतिपथं प्राप्तोऽखिलांहोगु(ग)णा
न्दूरीकृत्यनिराकरोति विमलां मुक्तिं ददाति स्वतः ।
वेदान्तैरखिलैः स्तुतः स तु मनुः शैवस्ततस्तं मनुं
वेदोवेद शिवोऽथवा तदितरो नो वेद सन्त्यं ध्रुवम् ।।

काशीवीथिषु सञ्चरन्प्रतिपदं यागायुतानां फलं
सम्प्राप्नोति नराधमोऽपि किमुत स्वस्थः शिवाराधकः ।
... ... — — — — — —
तस्मादादरतोऽनिशं शिवपरैः सेव्यो मृडानीपतिः ।।

सेव्यः सन्तनमन्तकान्तकमहादेवेति संवादिभिः
संसाराद्भुत-सागरेषु पतिताः क्लिश्यन्ति ये सन्ततम् ।
ते काशीं तनिमाशु शाम्भवकृपां सम्प्राप्य तीर्त्वैव तान्
यातायातपरिश्रमैर्बहुतरैर्दुस्तार संसारजैः ।। 565

निर्मुक्ताः शिवमेवसाम्बमनघं संप्राप्नुवन्ति ध्रुवं
बद्धस्तावदनेकदुष्कृतचयैः संसार पाशैर्नरः ।
नानादुःखयुतैरनुक्षणमभेद्यापत्समूहैरपि
यावन्नाप महेशसान्द्रकृपया काशीं महेशाश्रयाम् ।। 566

काशीं प्राप्य तु मुच्यते दृढतरैः संसारपाशैर्नरः
मर्त्यास्तावदिह भ्रमन्ति सततं संसारघोरह्रदे ।
पापावर्तसमन्विते दुरितभूरिस्वस्तरङ्गावृते
(जनिमृतिद्वन्द्वेतरङ्गाकुले)
यावद्विश्वपतिप्रिया सुरनता काशीं न सम्प्राप्यते ।।

(काशींप्राप्य तु नो भ्रमन्ति मनुजाः संसारघोरह्रदे ।)
तावद्भ्रान्तधियो भ्रमन्ति मनुजाः ससारघोरह्रदे ।।

काशीं प्राप्य कुयोनिचक्रकुहरं न प्राप्नुवन्ति ध्रुवम्
सत्यं सत्यमिहोच्यते भुजयुगं सम्यक्समुद्धृत्य च ।
वेदास्तत्र तु साक्षिणः श्रुतिशिरोवेद्योऽथसाक्षी शिवः
विष्णुब्रह्मपुरोगमाः सुरगणा ये चात्र ते साक्षिणः ।।

काशीमाशु समाश्रितः शिवमनाद्यन्तं भवेद्यः सदा
सानन्दं च समस्तदुःखनिकरं संहृत्यशुद्धः शिवम् ।
सम्प्राप्नोति न संशयः श्रुतिरियं काशी समाश्रीयताम्
विश्वेशः समुपास्यतां इति यतो डिण्डीरवो वैदिकाः ।।

घोरा यद्यपि शाम्भवैः श्रुतिमता काशीपुरी राधिता
न त्याज्या त्रिपुरारिराजनगरी काशी यतो मुक्तिदा ।
त्यक्ता सा यदि मोहतः श्रुतिमता काशी तदा दुर्लभा
मुक्तिः सत्यमिति श्रुतिः श्रुतिरियं मान्या सदा वैदिकैः ।।

श्रीविश्वेश्वरमप्रमेयममलं वेदान्तवेद्यं प्रभुं
लिङ्गाकारमुमाश्रितं श्रुतिमतं काश्यां सदा संस्थितम् ।
यः सन्त्यज्य दिगन्तरं प्रति नरो मोहात्समुक्त्यङ्गना-
पादाग्रेण हतः पतत्यनुदिनं संसार कूपेध्रुवम् ।। 571

तं मन्ये पुरुषाधमं नरखरं संसारदुःखाश्रयं
निर्भाग्यं रतिदानदुःखनिरतं पापौघमोहाश्रयम् ।
यः काशीं न निषेवते शिवमुमाकान्तं न संसेवते
संसारार्णवतारकं प्रभुमनाद्यन्तं भवानीपतिम् ।। 572

तं मन्ये पुरुषोत्तमं शिवमतं निर्मूलिताघद्रुमं
वेदान्तार्थविचारपारगहितं सौभाग्यवन्तं सदा ।
यः काशीं समुपैति(त्य)तं शिवमनाद्यन्तं भजेत्सन्ततं
भस्मोद्धूलित विग्रहः शिवमहादेवेति मन्त्रंजपन् ।। 573

काश्येका जगतीतले श्रुतिमता मुक्तिप्रदेतिश्रुता
गौरीशङ्कर सम्मता मुनिवरैर्वेदैश्च नित्यं स्तुता ।
काशीतोऽधिकमन्यतीर्थमभितो वेदेषु न श्रूयते
तीर्थानामधिदेवतेयमनघा काशी महेशप्रिया ।। 574

काश्यां वर्णयिता शिवः परतं पञ्चाक्षरं तारकं (?)
तच्छैवं प्रणवान्वितं श्रुतिशिरो रत्नं तदित्यादरात् ।

दुर्वासादिसमस्तमौनिनिकरैः काशीसमाराधिता
सेयं शम्भुसमाश्रिता शिवपुरी मुक्त्यङ्गनासंश्रया ॥

काशी वीथिषु मुक्तिरूपवनिता विश्वेश्वरप्रेरिता
सञ्चारं समुदङ्करोति परितः स वीक्ष्य शैवोत्तमान् ।
एते मामभियान्तु सत्वरमिह प्रध्वस्त दुःखाश्रयः
श्रीविश्वेशकृपावशादिति सदा वेदान्तवाक्यस्तुता ॥

एतद्वेदरहस्यमाहुरभितो वेदान्तवाक्यैर्यतः
निश्चित्योक्तमनेकमेव हृदयं प्रागेवमेवोदितम् ।
देवीषण्मुखनन्दिभृङ्गिरिटिभिः संसेवितेनादरात्
आराध्येन महेश्वरेण जगतामीशेन सत्यं ध्रुवम् ॥ 577

मौद्गल्यः (उवाच) -

इति तद्वचनं श्रुत्वा भृगुं काश्यामुवास सः ।
काशीप्रभावो विज्ञातस्तेन लिङ्गार्चनान्मुने ॥ 578

शिवलिङ्गार्चनफलं मया वक्तुं न शक्यते ।
शिवलिङ्गार्चनफलं भगवान्वेद शङ्करः ॥ 579

शिवलङ्गार्चनं दानं शिवलिङ्गार्चनं तपः ।
शिवलिङ्गार्चनं ध्यानं शिवलिङ्गार्चनं जपः ॥ 580

अगस्त्यः (उवाच) -

इति तद्वचन श्रुत्वा मुनयस्ते-ततः परम् ।
शिवार्चनपरा जाता भस्मोद्धूलितविग्रहाः ।। 581

शिवलिङ्गार्चनंनित्यं तदकृत्वैव यो वसेत् ।
स याति नरकं घोरं कल्पान्तेऽपि न संशयः ।। 582

पुरा वसिष्ठो मोहेन त्यक्तभस्मानुलेपनम् ।
त्यक्तलिङ्गार्चनं शिष्यं विलोक्याहातिदुःखितः ।। 583

वसिष्ठः (आह) -

हा हा शिष्य कथं त्यक्तं विभूत्युद्धूलनं त्वया ।
कथं शिवार्चनं त्यक्तं वेदवेदान्तबोधितम् ।। 584

त्यक्तलिङ्गार्चनैर्विप्रैस्त्यक्तभस्मानुलेपनैः ।
प्राप्यन्ते यातना घोराः सततं कल्पकोटिषु ।। 585

येन त्यक्तो भस्मयोगो येन त्यक्तं शिवार्चनम् ।
तस्य कल्पशतान्तेऽपि मुक्तिरत्यन्त दुर्लभा ।। 586

भूतिलिङ्गार्चनं त्यक्त्वा करोतूग्रं तपोऽनिशम् ।
तथापि तत्तपस्तस्य फलदं न भविष्यति ।। 587

अगस्त्य: उवाच -

इत्युक्त्वा शिष्य संयुक्तो वसिष्ठो वेदवित्तमः ।
ययौ यमसभां सद्यः शिवनामानि कीर्तयन् ।। 588

स सभासद्यमः श्रुत्वा शिवनामानुकीर्तनम् ।
अभ्युत्थाय वसिष्ठं तं पूजयामास सादरम् ।। 589

ततः प्रहृष्टहृदयो वसिष्ठो यमपूजितः ।
विधाय कुशलप्रश्नमन्यदप्याह सादरम् ।: 590

वसिष्ठ उवाच :-

यमात्रागणिताः सन्ति नरकेष्वति दुःखिताः ।
पच्यमाना बाध्यमाना दह्यमानाश्च किङ्करैः ।। 591

एतैः किं किं कृतं पापं पुरा नरकसाधनम् ।
कीदृशैर्भुञ्जते पापैर्घोरा नरकयातना ।। 592

यमेदं मह्यमखिलं विचार्य वद सादरम् ।
येन पापान्निवृत्तिः स्याद्यातनासाधनान्मम ।। 593

अगस्त्यः (आह) -

इति तद्वचनं श्रुत्वा दृष्ट्वा स नरकस्थितान् ।
दह्यमानान्पच्यमानानुवाच वचनं तदा ।। 594

.... ...

यम उवाच -

सर्वकामप्रदं श्रौदं सुलभं लिङ्गपूजनम् ।
पुरा त्यक्तं दुराचांरैरेतैर्नरकवासिभिः ॥ 595

त्यक्तं (पुण्यं) लिङ्गार्चनं श्रौतं पतिता नरकालये ।
नैतेषां ब्रह्मकल्पान्तेऽप्यस्मान्मोक्षोनदृश्यते (भविष्यति) ॥

मोक्षोऽस्ति ब्रह्महादीनां कल्पान्ते तु पाप्मनः ।
त्यक्त लिङ्गार्चनानां तु मोक्षो नास्त्येव सर्वथा ॥ 597

त्यक्तलिङ्गार्चनानां तु (चे)न्नरकान्निर्गमो भवेत् ।
तदा समुद्रे विन्ध्याद्रिः प्लवेत्(?) काष्ठकरण्डवत् ॥ 598

त्यक्तलिङ्गार्चनानां चे .... .... ।
तदोत्तमाश्वोजायेत गर्दभादतिकोमलात् ॥ 599

त्यक्तलिङ्गा .... .... ।
तदा मृगेन्द्रोजायेत हरिणीशाबकादपि ॥ 600

त्यक्तलिङ्गा .... .... ।
तदा गजेन्द्रोजायेत सूकरादतिकोमलात् ॥ 601

त्यक्तलिङ्गा .... .... ।
तदा शृङ्गाणि जायेरन्नराणां नेत्रगोलकात् ॥ 602

त्यक्तलिङ्गा .... .... ।
तदोत्पत्तिः शिलायां स्यादङ्कुराणां मृदंविना ॥ 603

त्यक्तलिङ्गार्चनानां चे .... .... ।
तदा घ्राणेन गृह्येत विनाश्रोत्रं गजध्वनिः ॥ 604

त्यक्तलिङ्गा .... .... ।
तदा श्रोत्रेण गृह्येत घटादिर्नयनं विना ॥ 605

त्यक्तलिङ्गार्चनानां .... .... ।
तदा नेत्रेणगृह्येत गन्धोघ्राणेन्द्रियं विना ॥ 606

त्यक्तलिङ्गा .... .... ।
तदा घ्राणेन गृह्येत रसो जिह्वेन्द्रियं विना ॥ 607

त्यक्तलिङ्गा .... .... ।
तदा स्पर्शोऽपि गृह्येत रसनेन त्वचं विना ॥ 608

त्यक्तलिङ्गार्चनानां चेन्नरकान्निर्गमो भवेत् ।
तदा त्वचैव गृह्येत बुध्याधारो(?) विना मनः ॥ 609

तस्मात्त्यक्तशिवार्चानां निष्कृतिर्नरकालयात् ।
नास्त्येव ब्रह्मकल्पान्तेऽप्येतत्सत्यं न संशयः ॥ 610

ये तिष्ठन्ति भ्रमेणापि विहाय शिवपूजनम् ।
ते कल्पान्तेऽपि न त्याज्या नरकेभ्यो न संशयः ॥ 611

भस्मानुलेपनं त्यक्त्वा ये तिष्ठन्ति नराधमाः ।
ते कल्पान्तेऽपि न त्याज्या .... .... ॥ 612

रुद्राक्षधारणं त्यक्त्वा ये तिष्ठन्ति नराधमाः ।
ते कल्पान्तेऽपि न त्याज्या .... .... ॥ 613

ये शिवस्मरणं त्यक्त्वा शिवान्यस्मरणे रताः ।
ते कल्पान्तेऽपि .... .... ॥ 614

प्रणामान्ये न कुर्वन्ति महादेवाय सादरम् ।
ते कल्पान्तेऽपि .... .... ॥ 615

ये न कुर्वन्ति यत्नेन श्रीमहादेवपूजनम् ।
ते कल्पान्ते .... .... ॥ 616

ये न कुर्वन्ति यत्नेन महादेवस्तुतिं मुदा ।
ते कल्पान्ते .... .... ॥ 617

ये न कुर्वन्ति यत्नेन श्रीमहादेववीक्षणम् (दर्शनम्) ।
ते कल्पान्ते .... .... ॥ 618

श्रीमहादेवनैवेद्यमन्वहं ये न भुञ्जते ।
ते कल्पान्ते .... .... ॥ 619

शिवाभिषेकपानीय (सलिलं) मन्वहं न पिबन्ति ये ।
ते कल्पान्तेऽपि न त्याज्या नरकेभ्यो न संशयः ॥ 620

शिवभक्तिविहीना ये ते दण्ड्या मम सर्वदा ।
तदन्ये शिवभक्ता ये ते पूज्या मम सर्वदा ।। 621

अनन्तब्रह्मकल्पान्तेऽप्यशैवानां महामुने ।
न निवृत्तिरघोरेभ्यो नरकेभ्यो न संशयः ।। 622

महेश्वरार्चनं पूर्वमेतैर्न कृत मादरात् ।
अतस्तप्तकटाहेषु पतिताः सन्ति सर्वदा
(पात्यन्तें किङ्करैः सदा)।। 623

प्रणामा न कृता दुष्टैरेतैस्त्रिपुरघातिनः ।
अतस्तप्तायसस्तम्भांस्तिष्ठन्त्याकृष्य(क्षिप्य)सर्वदा ।। 624

प्रदोषेषु महादेवोनैतैः संसेवितो मुदा ।
अत एव भ्राष्ट्रमध्ये भर्ज्यन्ते बहुधा सदा ।। 625

शिवरात्रव्रतं त्यक्त्वा स्थितमेतैर्दुरात्मभिः ।
अत एव महाघोरे कुम्भीपाके निपातिताः ।। 626

एतैर्भुक्तं दिवा पूर्वं स्वेच्छया सोमवासरे ।
अत एवाति सन्तप्ते विषकुण्डे निपातिताः ।। 627

कालाष्टमीव्रतं त्यक्तमेतैः पूर्वं दुरात्मभिः ।
अत एवातिसन्तप्त वालुकासु निपातिताः ।। 628

एतादृशान्दुराचारानन्ताान्नरकस्थितान् ।
दृष्ट्वाहमपि क्लिश्यामि कदाचिन्मुनिसत्तम ।। 629

सन्ति बिल्वानि हस्तौस्तस्तथापि शिवपूजने ।
नैवास्ति मतिरेतेषां स्थितानां नरकालये ।। 630

जलमस्त्यमलं लिङ्गे दातुं शक्तिरपि स्थिता(रा) ।
तथापि तत्परित्यागात्पतन्ति नरके जनाः ।। 631

यथेष्टं भुवि भस्मास्ति सर्वपातकशोधकम् ।
तथापि तत्परि .... .... ।। 632

महादेवस्तुतिं कर्तुं वागस्ति वशवर्तिनी ।
तथापि तत्परि .... .... ।। 633

शिवप्रदक्षिणं कर्तुं स्ववशौ चरणौ स्थितौ ।
तथापि .... .... ।। 634

शिवाय प्रणतिं कर्तुं शरीरं स्ववशं (शे) स्थितम् ।
तथापि .... .... ।। 635

महेशकीर्तनं कर्तुं रसना स्ववशस्थिता ।
तथापि .... .... ।। 636

महेशस्मरणं कर्तुं स्वान्तं च स्ववशे स्थितम् ।
तथापि तत्परित्यागात्पतन्ति नरके जनाः ।। 637

हा हा त्यक्तशिवाचारा नराः सर्वेऽपि पामराः ।
कथं पतन्ति नरके शलभा इव पावके ।। 638

शैवाचारविहीनानामेतेषां नरकालयात् ।
न कदापि मुनिश्रेष्ठ निष्कृतिः सत्यमुच्यते ॥ 639

शैवधर्मरतामर्त्या भित्वान्तः सूर्यमण्डलम् ।
प्रयान्ति शिवसायुज्यं स्वेष्टबन्धुसमन्विताः ॥ 640

मुने चरमदेहानां शैवाचाररतात्मनाम् ।
महेश्वरप्रसादेन मुक्तिर्भवति वस्तुतः ॥ 641

मृल्लिङ्गपूजनं श्रौतं मोक्षदं सुलभं मुने ।
कृतं येन प्रयत्नेन स मुक्तो भवति ध्रुवम् ॥ 642

मृल्लिङ्गपूजामात्रेण सद्यस्तुष्यति शङ्करः ।
सन्तुष्टः स ददात्येव भुक्तिं मुक्तिं च वस्तुतः (देहिनाम्) ॥

मृल्लिङ्गपूजनं श्रौतं राज्यस्वर्गापवर्गदम् ।
तत्कल्पलतिकेवेष्टं किं किं नैव(वा न) प्रयच्छति ॥ 644

शिवैकशरणाः शैवाः शिवलिङ्गार्चनप्रियाः ।
भुक्त्वा स्वाभीप्सितान्भोगानन्ते मुक्ता भवन्ति च ॥ 645

शैवेभ्य एव दास्यामि मुक्तिमित्याह शङ्करः ।
अतो मुनेतदन्येषां मुक्तिरत्यन्तदुर्लभाः ॥ 646

येन चीर्णं प्रयत्नेन श्रौतंपाशुपतं व्रतम् ।
तेन लब्धा मुक्तिकान्ता महादेव प्रसादतः ॥ 647

येन पञ्चाक्षरो जप्तोभस्मोद्धूलनपूर्वकम् ।
तेन लब्धा .... .... ॥ 648

येन स्मृतो महादेवो भस्मोद्धूलनपूर्वकम् ।
तेन लब्धा .... .... ॥ 649

येन ध्यातो महादेवो भस्मोद्धूलनपूर्वकम् ।
तेन लब्धा .... .... ॥ 650

बहुनोक्तेन किं वाक्यं सत्यमेतन्मुनेश्शृणु ।
सर्वान्देवान्परित्यज्य शिवः पूज्यो मुमुक्षुभिः ॥ 651

अगस्त्यः (उवाच) -

इत्युक्तं तद्वचः श्रुत्वा वसिष्ठो हृष्टमानसः ।
सशिष्यः स्वाश्रमाभ्याशे यमेनप्रेरितो ययौ ॥ 652

ततः परं यमेनोक्तं वचःश्रुत्वा(र्थवच्छुभम्) ।
वसिष्ठशिष्यः शश्वन्तो लिङ्गंपूजापरोऽभवत् ॥ 653

स कृत्वा मृन्मयं लिङ्गं सर्वाभीष्ट प्रदायकम् ।
बिल्वपत्रैर्भस्मना च पूजयामास भक्तितः ॥ 654

ततो मृन्मयलिङ्गस्य पूजां कृत्वा शिवं स्मरन् ।
त्यक्तदेहः शिवं प्राप सर्वदेवशिखामणिम् ॥ 655

अतो मृन्मयलिङ्गस्य पूजनं सर्वकामदम् ।
तुष्टो भवति गौरीशो यतो मृल्लिङ्गपूजया ।। 656

सम्पूज्य मृन्मयं लिङ्गं यो नित्यमनुमोदने(ते) ।
तद्द्वारि मत्तमातङ्गास्तिष्ठन्त्येवामिता मुने ।। 657

मुने पार्थिवलिङ्गस्य पूजनं शङ्करप्रियम् ।
धर्मार्थकाम मोक्षाणामचिरेणैव दायकम् ।। 658

भस्मगोमयवार्क्षादि लिङ्गान्यपि सनातन ।
पूजनीयानि यत्नेन धनधान्याभिवाञ्छिभिः ।। 659

मुने भस्मादि लिङ्गानि मोक्षदान्यपि वस्तुतः ।
भवन्ति भक्ततुष्ट्यर्थं धनधान्यान्नदान्यपि ।। 660

एकैकमपि तल्लिङ्गं धनधान्यप्रदं मुने ।
मोक्षदं च तथाप्युक्तफलं भवति तत्क्षणम्(क्षणात्) ।।

मुने शिवार्चनं यस्माच्चतुर्वर्गफलार्थिभिः ।
शिवोददाति विष्णुत्वं सन्तुष्टो लिङ्गपूजया ।। 662

तथा ब्रह्मत्वमिन्द्रत्वं ददात्यैव महेश्वरः ।
विना तपोभिर्दानैश्च केवलं शिवपूजया ।। 663

मुने भवन्त्यभीष्टानि श्रीमहेशप्रसादतः ।
यत्पादपद्ममभ्यर्च्य स्वनेत्राब्जेन केशवः ।। 664

चक्रं च प्राप गौरीशात्पूजनीयो[1] मुमुक्षुभिः ।
स्तुवन्ति यं सदादेवा वेदाश्चापिस्तवोन्मुखाः ॥ 665

स देवदेवो गौरीशः पूजनीयः प्रयत्नतः ।
यमाहुर्विष्णुजनकं यमाहुर्जनकं विधेः ॥ 666

यमाहुर्गिरिजानाथं यमाहुर्मदनान्तकम् ।
स देवदेवो गौरीशः पूजनीयः प्रयत्नतः ॥ 667

यमाहुः स्कन्दजनकं यमाहुः सर्वगं प्रभुम् ।
स देवदेवो गौरीशः पूजनीयः प्रयत्नतः ॥ 668

मुने विश्वाधिकं रुद्रं यमाहुः श्रुतयोऽखिलाः ।
स देवदेवो .... .... ॥ 669

मुने विश्वाधिकं रुद्रमभ्यर्च्य सर्वकामदम् ।
परित्यज्यार्चयन्त्यन्यानमरान्पामरा नराः ॥ 670

को नु विश्वाधिकाद्रुद्रादन्यं पूजयति भ्रमात् ।
ऋते महापातकिनं पापिष्ठं नरकाश्रयम् ॥ 671

सर्वदेवोत्तमं साम्बं यो नार्चयति सन्ततम् ।
दुरात्मा स तु पापिष्ठः स सुरापः स पुल्कसः ॥ 672

---

1 अतोहेतोः शिवः पूजनीय इति वाक्यशेषः ।

शिवार्चनपरो मर्त्यो न बिभेति यमादपि ।
किं पुनर्जन्म मरणजरारोगादिभिः (तो) मुने ।। 673

यतश्चरमदेहानां शिवे भक्तिः प्रजायते ।
ततो जन्मजरादिभ्यो न बिभेति शिवार्चकः ।। 674

महद्भाग्यं शाम्भवानां शम्भु संसक्तचेतसाम् ।
यतः पुनर्नजन्मादिभयं तेषां महात्मनाम् ।। 675

यस्य शैवो भवामीति बुद्धिर्भवति भाग्यतः ।
स धन्यः कृतकृत्यश्च मान्यः सर्वामरैरपि ।। 676

धन्यानां शिवभक्तानां मतिर्निर्मलदेहिनाम् ।
यद्भाग्यं तादृशैर्भोग्यममरैरप्यपेक्षितम् ।। 677

पुत्रात्रैवार्भकः कश्चिद्दरिद्रो व्याधिपीडितः ।
स मये(यै)वोपदिष्टोऽत्र चक्रेमृल्लिङ्गपूजनम् ।। 678

स ततो व्यधिनिर्मुक्तो ययौ रत्नधनेश्वरम् ।
तेन सम्पूजितो राज्ञा स एव शिवपूजकः ।। 679

तस्त रत्नधनेशस्य ज्येष्ठपुत्रो विशारदः ।
नानारोगसमाक्रान्तो दुःखितः संस्थितो मुने ।। 680

स राजा तादृशं पुत्रं स्मृत्वा स्मृत्वा पुनः पुनः ।
दुःखसंविग्नहृदयो(यः)सबाष्पोऽभूत्तदा मुने ।। 681

तं तादृशं विलोक्याह स एव शिवपूजकः ।
किं क्लिश्यसि नृपश्रेष्ठ किमासीदिति सादरम् ॥ 682

इति तद्वचनं श्रुत्वा स राजा गद्गदध्वनिः ।
मुञ्चन् वाष्पाणि बहुधा तमाह शिवपूजकम् ॥ 683

रत्नधनेश्वरः [उवाच] -

शैवोत्तम ममास्त्येकः पुत्रोज्येष्ठो विशारदः ।
नानारोगसमाक्रान्तस्तिष्ठति प्रियकृत्तमः ॥ 684

स पूर्वमभवत्पुत्रः सर्वशत्रुनिबर्हणः ।
तमद्य राजयक्ष्मादिनानारोगाः समावृताः
(सम्पीडयन्ति च) ॥ 685

दत्तानि सुरवैद्याभ्यामौषधानि सहस्रशः ।
तथापि तस्य ते रोगा न नश्यन्त्यति दुःखदाः ॥ 686

धन्वन्तरिः समागत्य ददावौषधमादरात् ।
तथापि तस्य ते रोगा वृद्धियान्ति क्षणे क्षणे ॥ 687

यावन्ति सन्त्यौषधानि पातालादि जगत्त्रये ।
तावन्ति भक्षितान्येव तथापि न सुखी सुतः ॥ 688

दिने दिने तनुःक्षीणा जायते तस्य शाम्भव ।
तद्दुःखेनैव सततं दुःखितोऽस्म्यहमीदृशः ॥ 689

सूर्यादयो ग्रहाः सर्वे जपहोमादिभिः पुरा ।
सम्यगाराधिता देवास्तथापि न सुखी सुतः ।। 690

आयुर्दानि च दानानि कृतानि बहुधामया ।
तथापि नामयाः शान्तास्ततोऽपि न सुखी सुतः ।। 691

अधुना वा दिनान्ते वा मरिष्यति विशारदः ।
तस्मिन्मृते पुत्रशोकात्तनुं त्यक्ष्याम्यहं ध्रुवम् ।। 692

विशारदसमः पुत्रो न भूतो न भविष्यति ।
तस्मिन्मृते मम प्राणा गमिष्यन्त्येव तत्क्षणे ।। 693

तस्मिन् मृते शत्रवो मे प्रबला मदविह्वलाः ।
स सैन्यं मां हनिष्यन्ति हरिष्यन्ति च तद्धनम् ।। 694

अगस्त्यः (उवाच) -

एवं ब्रुवाणं राजानं (मु) उदश्रुं स शिवार्चकः ।
प्राह धैर्यं समाश्रित्य मा भैषीरिति सादरम् ।। 695

शवार्चकः (आह) -

राजन् तद्दोषशान्त्यर्थं कुरुमृल्लिङ्गपूजनम् ।
सदा करोतु यत्नेन भक्त्या मृल्लिङ्गपूजनम् ।। 696

क्षणं मृन्मयलिङ्गानां यदि कुर्यात्स पूजनम् ।
तदा स सर्वरोगेभ्यो मुच्यते नात्र संशयः ।। 697

किमौषधैर्जपैर्होमैः किं दानैः किं ग्रहार्चनैः ।
किमन्यैरप्युपायैश्च विनामृत्युञ्जयार्चनम् ।। 698

सद्यः सिध्यन्त्यभीष्टानां(नि) कृते मृत्युञ्जयार्चने ।
मृत्युञ्जयार्चनाऽसाध्यं न किञ्चिदपि भूपते ।। 699

मृत्युं तरन्ति ते मर्त्या ये मृत्युञ्जयपूजकाः ।
मर्त्या मृत्युवशं यान्ति त्यक्तमृत्युञ्जयार्चनाः ।। 700

मृत्युञ्जयमनभ्य यो मृत्युं तर्तुमिच्छति ।
स मूर्ख इति विज्ञेयः सत्यं सत्यं न संशयः ।। 701

दीर्घायुषो भविष्यन्ति कृतमृत्युञ्जयार्चनाः ।
अल्पायुषो भविष्यन्ति त्यक्तमृत्युञ्जयार्चनाः ।। 702

मृत्युञ्जयार्चनं कार्यं मृल्लिङ्गे सर्वकामदे ।
तत्र सम्पूजितः शम्भुः प्रसीदति न संशयः ।। 703

राजन्नायुष(ष्य)मारोग्यमैश्वर्यमतुलं बलम् ।
ज्ञान निर्वाणमप्यन्ते प्राप्यं मृल्लिङ्गपूजया ।। 704

मृल्लिङ्गपूजनं कृत्वा विधिवद्भक्तिपूर्वकम् ।
भुक्त्वा भोगान्यथाकामं शिवं यान्ति च भूपते ।। 705

मृल्लिङ्गार्चनमात्रेण सोमः सोमार्धशेखरः ।
सन्तुष्टः सकलाभीष्टान्दास्यत्येव ध्रुवं ध्रुवम् ॥ 706

मृलिङ्गपूजनं राजन् करोत्वद्य सुतस्तव ।
अद्यैवरोगनिर्मुक्तो भविष्यति न संशयः ॥ 707

विनश्यन्त्यामया राजन् मृत्तिकालिङ्गपूजया ।
विश्वासं कुरु मद्वाक्ये नाहमस्मि प्रतारकः ॥ 708

मृल्लिङ्गपूजनं कृत्वाप्ययं चेद्रोगवान्भवेत् ।
तदा कथं प्रमाणं स्युर्वेदास्तद्वदभूपते ॥ 709

अगस्त्यः (उवाच) -

इति तद्वचनं श्रुत्वा स भूपोहृष्टमानसः ।
उपवेश्य सुतं यत्नाद्भस्मस्नानमकारयत् ॥ 710

लक्षं मृन्मयलिङ्गानां कारयामास सादरम् ।
शिवपूजन सामग्रीं स सम्पाद्यैव भूपतिः ॥ 711

व्याघ्राजिने सन्निवेश्य तमशक्तं सुतं तदा ।
उद्धूलन त्रिण्ड्राभ्यां रुद्राक्षैश्च विभूषितः (विभूषयन्) ॥

उपवेश्यत्वशक्तं तं पुत्रं धृत्वा स्वपार्श्वतः ।
पुत्रेण कारयामास मृत्रिकालिङ्गपूजनम् ॥ 713

स कोमलैर्बिल्पत्रैरमितैरतिशोभनैः ।
पुष्पैर्नानाविधैरीशं मृल्लिङ्गेषु समार्चयत् ।। 714

धूपयामास गौरीशं स ततोऽगरुराशिभिः ।
दीपयामास स ततं शिवं कर्पूरराशिभिः ।। 715

नैवेद्यं च ददौ शम्भोः क्षीरान्नापूपराशिभिः ।
पुनः सुवर्णपुष्पाद्यैः पूजयामास शङ्करम् ।। 716

ततः पूर्वमशक्तोऽपि मरणायोन्मु (मृत्युकालोन्मु)-
खोऽपि सः ।
तदा सत्वरमुत्थाय चक्रे शम्भोः प्रदक्षिणाम् ।। 717

प्रणनाम ततः शम्भुं बहुवारं प्रयत्नतः ।
मूर्ध्न्यञ्जलिमाधाय दध्यौ च स महेश्वरम् ।। 718

कृतप्राणाममीशाय सुतं रत्नधनेश्वरः ।
विलोक्य हर्षसम्पन्नश्चन्द्रोदय इवाम्बुधिः । 719

मृल्लिङ्गपूजया सद्योमुक्तरोगो विशारदः ।
पुनः सम्पूजयामास बिल्वपत्रादिभिः शिवम् ।। 720

विशारदं समालिङ्ग्य रत्नकोशधनेश्वरः ।
आघ्रायाघ्राय मूर्धानमानन्दाश्रूण्यमञ्चत ।। 721

विशारदस्य जननी सुतमालिङ्ग्य सादरम् ।
सन्तोषं परमं प्रापजातः पुत्रोऽधुनेति सा ।। 722

सुहृदः सुखिनो जाताः सर्वे वैशारदास्तदा ।
शत्रवो दुःखिता जातास्तदा वैशारदा मुने ।। 723

यदा शिवप्रणामार्थं उत्थितः स विशारदः ।
तदा शत्रुकिरीटानि पतितानि सभास्थले ।। 724

तदा शत्रुसभाऽऽस्थाने जज्वाल भौमवह्निना (पावकः) ।
छिन्नानि कण्ठसूत्राणि तच्छत्रुस्त्रीगलादधः ।। 725

तदा सामन्तभूपाला मुक्तरोगं विशारदम् ।
गजरत्नाश्च (रत्नैश्च)रत्नाद्यैरुपतस्थुर्यथोचितम् ।। 726

**अगस्त्यः (उवाच) -**

इत्थं पार्थिवलिङ्गानां पूजया स विशारदः ।
मुक्तरोगो बलं तेजः सौभाग्यं चाप सत्वरम् ।। 727

विनैवौषधपथ्याभ्यां केवलं शिवपूजया ।
मुक्तरोगं सुतं वीक्ष्य तत्पिताऽभूत्प्रहर्षितः ।। 728

ततः सौभाग्यसम्पन्नस्तुष्टो रत्नधनेश्वरः ।
ददावगणितं द्रव्यं तस्मै शैवाय सादरम् ।। 729

ददौ गजानुत्तमाश्वान् ददौग्रामांश्चकोटिशः ।
रत्नान्यपि ददौ भक्त्या पुत्रदस्त्वमितिस्तुवन् ।। 730

तदा प्रभृतियत्नेनपित्नासह विशारदः ।
नित्यं पार्थिवलिङ्गानां सहस्रं समपूजयत् ॥ 731

विशारदः स मृल्लिङ्गपूजयैव दिने दिने ।
प्रवृद्धि (कीर्ति) प्रवृद्धकान्तिरभवन्मुने नक्षत्रराडिव ॥

निहताः शत्रुनिचयांस्तेनैव बलिना ततः ।
शत्रुराष्ट्राणि सर्वाणि तेनाक्रान्तानि तेजसा ॥ 733

ततः स कारयामास भक्त्या रत्नशिवालयम् ।
सप्रसादं मणिप्रख्यं सप्राकारं सगोपुरम् ॥ 734

तत्र सस्थापयामास रत्नलिङ्गमनुत्तमम् ।
तत्रोत्सवान्प्रयत्नेन कारयामास सन्ततम् ॥ 735

शिवभक्तिः प्रवृद्धासीत्तदा प्रभृति भूपतेः ।
तया भक्त्या महादेवं पूजयामास सन्ततम् ॥ 736

शिवभक्तिः प्रवृद्धासीत्तस्य देवेमहेश्वरे ।
यथा तथा प्रवृद्धोऽभूत्सम्पद्भिश्च बलेन च ॥ 737

दिने दिने कलावृद्धिर्यथा चन्द्रस्य जायते ।
तथा तस्याभवद्राज्ञः शिवभक्तिः शिवप्रदा ॥ 738

शत्रूणामप्रधृष्योऽभूत्सौम्योऽभूत्स्वजनप्रियः ।
बलैश्वर्यसमृद्धोऽपि विनयेन स्थितस्सदा ॥ 739

अतो यं काममुद्दिश्य यः शिवंपूजयिष्यति ।
स तं काममवाप्नोति ततोऽधिकमपि ध्रुवम् ॥ 740

येऽर्चयन्ति महादेवं सावधानेन सन्ततम् ।
ते समृद्धा भवन्त्येव पुत्रदारधनादिभिः ॥ 741

अप्राप्यं नास्ति शैवेन्द्र श्रीमहादेवपूजया ।
श्रीमहादेवमाराध्य को वा न सुखमेधते ॥ 742

नित्यमव्यभिचारिण्या भक्त्या पूज्योमहेश्वरः ।
दुर्लभा तादृशी भक्तिर्यतः सर्वार्थदायिनी ॥ 743

किं कामुधेनुभिर्विप्र किं कल्पतरुकोटिभिः ।
यदि भक्तिर्महादेवे सर्वसम्पत्प्रदायिनी ॥ 744

यदि भक्तिर्महादेवे भक्तितरव्यभिचारिणी ।
तदेन्द्रोपेन्द्रचन्द्राद्या गणनीया न सर्वथा ॥ 745

सम्प्राप्य शाम्भवीं भक्तिं गणयिष्यति कः सुरान् ।
शिवेतरामराः सर्वे यतः शङ्करकिङ्कराः ॥ 746

देवोत्तमं महादेवमाश्रित्याप्यन्यदैवतम् ।
कः समाराधयेत्प्राज्ञो धनीनिर्धनिनो धनम् ॥ 747

येऽभिवाञ्छन्ति सततमैहिकामुष्मिकं फलम् ।
तेषां सदा शिवादन्यः पूज्यो न भवति ध्रुवम् ॥ 748

दधीचिः -

एवमुक्त्वा स्थितोऽगस्त्यः सनातनमुनिं प्रति ।
इति तद्वचनं श्रुत्वा स सन्तुष्टोऽभवन्नृप ॥ 749

अतः सदाशिवो नित्यं सर्वभावेन सज्जनैः ।
पूजनीयो भुक्तिमुक्ति फलकाङ्क्षिभिरादरात् ॥ 750

सदाशिवः -

एवमुक्त्वा स्थितो देवि दधीचिर्नृपतिं प्रति ।
एतस्मिन्नन्तरे भानुरस्ताद्रिं समुपागतः ॥ 751

प्रदोषपूजारतचित्तवृत्ति-
दधीचिरार्ये सकलामरेशम् ।
समर्चयामास निशामुखे मां
मध्यार्जुनेशं नृपतिश्च सादरम् ॥ 752

॥ इति श्रीशिवरहस्ये सप्तमांशे
मध्यार्जुन महिमानुवर्णनं नाम सप्तविंशोऽध्यायः ॥



## ॥ अष्टाविंशोऽध्यायः ॥

पार्वत्युवाच -

प्रदोषपूजनं कृत्वा सफलः प्रभुरीश्वरः ।
किं चकार दधीचिश्च किं चकार वदस्व मे [वद प्रभो] ॥

सदाशिवः (उवाच) -

प्रदोषपूजनं कृत्वा मरीचिर्मुनिपुङ्गवः ।
स्वाश्रमं गन्तुमुद्युक्तस्तदा तं प्राह भूपतिः ॥ 2

राजोवाच -

अगस्त्यवचनं श्रुत्वा किं चकार सनातनः ।
तत्सर्वमविशेषेण वद शाम्भवसत्तम ॥ 3

इति तद्वचनं श्रुत्वा दधीचिर्मुनिपुङ्गवः ।
सनातनस्य वृत्तान्तं पुनर्वक्तुं समारभत् (प्रचक्रमे) ॥ 4

दधीचिः (उवाच) -

श्रुत्वागस्त्यवचः सम्यक्प्रहृष्टः स सनातनः ।
कृताञ्जलिपुटो भूत्वा प्राहागस्त्यं ततो नृप ॥ 5

सनातनः (उवाच) -

सश्रुतं शिवलिङ्गानां माहात्म्यं भुक्तिमुक्तिदम् ।
पुनस्तु (श्र) श्रोतुमिच्छामि श्रीमहादेववैभवम् ॥ 6

दधीचिरुवाच -

इति तद्वचनं श्रुत्वा हृष्टोऽगस्त्यस्ततः परम् ।
शिवार्चनस्य माहात्म्यं मुदा वक्तुं समारभत् (प्रचक्रमे) ॥

अगस्त्यः (उवाच) -

सर्वभावेन सततं पूजनीयो महेश्वरः ।
ददाति पूजितः शम्भुर्भुक्तिमुक्तिं च सर्वथा ॥ 8

शिवलिङ्गे सदा भक्त्या पूजितः श्रीमहेश्वरः ।
प्रसीदति प्रसन्नात्मा ह्यभीष्टानि प्रयच्छति ॥ 9

महादेवे सुराधीशे प्रसन्ने सति शङ्करे ।
इन्द्रोपेन्द्रादिदेवानां मर्त्योऽप्यर्च्यो भविष्यति ॥ 10

सर्वसम्पत्प्रवृद्ध्यर्थं दुःखनाशाय चान्वहम् ।
कर्तव्यमतियत्नेन महेशस्यैव पूजनम् ॥ 11

पुरा गजासुरो नाम राक्षसो लोककण्टकः ।
चकार सर्वलोकानां पीडामत्यन्तदारुणाम् ॥ 12

स शरीरेऽभवन् (शरीरमभवत्) तस्य योजनार्बुदमायतम् ।
तस्य स्वर्गादिलोकेषु सर्वत्राप्यहृता गतिः ॥ 13

कदाचिद्याति स स्वर्गं सत्यलोकं कदाचन ।
कदाचिद्याति वैकुण्ठं वैकुण्ठादिकरप्रदः
(मदोद्रिक्तो निशाचरः) ॥ 14

कदाचिद्दुर्मदो दुष्टो लीलया स गजासुरः ।
गत्वा वैकुण्ठमनघं ददर्श कमलापतिम् ॥ 15

ततः समागतं वीक्ष्य कम्पयन्कमलापतिः ।
गदां जग्राह बलवान् तं निवर्तयितुं तदा ॥ 16

गदापाणिं समालोक्य कुपितः स गजासुरः ।
विष्णुं जग्राह तुण्डेन सगदं कमलान्वितम् ॥ 17

स चक्रवद्भ्रामयित्वा तं हरिं गगनान्तरे ।
पातयामास भूपृष्ठे दारुणे प्रस्तरान्विते ॥ 18

ततो ब्रह्मादिदेवांश्च पातयामास कोपतः ।
ततः सुखेन वैकुण्ठे कियत्कालं स संस्थितः ॥ 19

ततो विष्णुमुखाः सर्वे देवाः स (सङ्) क्षुब्धमानसाः ।
चक्रुशुस्तत्रचान्योन्यं गजासुरपराहताः ॥ 20

तदा गोरूपमासाद्य भूश्च भूभारकर्शिता ।
दृष्ट्वोपेन्द्रादिदेवांश्च चुक्रोशाश्रुसमावृता ॥ 21

अश्रुसङ्कीर्णनयना रुदती खिन्ननिःस्वना ।
उपेन्द्रेन्द्रादिकान्देवान्गौरुवाच ततः परम् ।। 22

भूमिरुवाच -

अवस्थेयं इयं (भृशं) देवा भवतामपि दुःखदा ।
दुःखसागरमग्नायाः का वार्ताऽतः परं मम ।। 23

क्व कर्तव्यं हरीन्द्राद्या मया दुःखनिवेदनम् ।
न दृश्यते मया कोऽपि सुखी दुःखप्रशामकः ।। 24

भवत्सु दुःखितेष्वेव कृते दुःखनिवेदने ।
दुःखशान्तिः कथं भूयाद्दुःखार्तस्य(र्तायाः) ममाधुना ।। 25

उपस्थितोऽधुना देवा विषमः काल ईदृशः ।
न लभ्यते सुखी कोऽपि यतो(मम) दुःखं निवेदितुम् ।। 26

शिवोऽस्ति परमानन्दः सच्चिदानन्दलक्षणः ।
न दृश्यते स सर्वेषां भक्तानां दुःखशामकः (नाशकः) ।। 27

भवद्भिरपराधोऽद्य कः कृतः श्रीमहेश्वरे ।
येने(नै)कदैव भवतामधिकारा गताः सुराः ।। 28

प्रायशः श्रीमहादेवो भवत्स्वद्य पराङ्मुखः ।
अन्यथा दुरवस्थेयमेकदा भवतां कथम् ।। 29

अशुभं जायते तेषां येषामीशः पराङ्मुखः ।
शुभानि तेषां येषां स्यात्प्रसन्नः श्रीमहेश्वरः ॥ 30

किमर्थं क्रियते दुःखं शरण्ये सति शङ्करे ।
स सच्चिदानन्दघनः कृपानिधिरुदारधीः ॥ 31

अगस्त्यः (उवाच) -

इति तद्वचनं श्रुत्वा सर्वदुःखविनाशकम् ।
विष्णुब्रह्मादयो देवा हिमवन्तं ययुस्तदा ॥ 32

विष्ण्वादीन् हिमवान्दृष्ट्वा कृत्वार्घ्यादिकमादरात् ।
व्यग्रचित्तान्स पप्रच्छ वैयग्र्यं किमभूदिति ॥ 33

देवा ऊचुः -

वयं सर्वेऽप्येकदैव गजासुरपराहताः ।
अस्माकमधिकाराश्च हृतास्तेनैकदैव हि ॥ 34

कथं वा पुनरस्माकमधिकारे महेश्वरः ।
कृत्वा पूर्ववदेवास्मान्पालयिष्यति तद्वद ॥ 35

कथं वा श्रीमहादेवः शीघ्रं सिद्धिं प्रयच्छति ।
सर्वसिद्धिकरो धर्मः को वा तद्वद सादरम् ॥ 36

अगस्त्यः (उवाच) -

इति तद्वचनं श्रुत्वा हिमवान् शङ्करप्रियः ।
सर्वसिद्धिकरं धर्मं मुने वक्तुं समारभत्(प्रचक्रमे) ॥ 37

हिमवानुवाच -

भो विष्णुप्रमुखा देवा भवन्तः पार्वतीपतिम् ।
पूजयध्वं प्रयत्नेन शिवलिङ्गस्वरूपिणम् ॥ 38

पूजिते श्रीमहादेवे शिवलिङ्गे शिवात्मके ।
दास्यत्यभीष्टानखिलान् भवद्भ्यो भगवान् शिवः ॥ 39

श्रौतानि शिवलिङ्गानि सन्ति नानाविधानि तु ।
तथापि तेषु मृल्लिङ्गं शीघ्रं सर्वार्थसिद्धिदम् ॥ 40

ततो भवन्तो यत्नेन मृल्लिङ्गं भक्तिपूर्वकम् ।
पूजयध्वं विधानेन भस्मस्नानपुरःसरम् ॥ 41

कुर्वन्त्वष्टाङ्गुलं लिङ्गमथवा द्वादशाङ्गुलम् ।
द्वात्रिंशदङ्गुलं वापि शुद्धशोधितमृत्स्नया ॥ 42

लिङ्गं षडङ्गुलान्न्यूनं न कर्तव्यं कदाचन ।
ततोऽधिकं तु कर्तव्यं स्वस्वशक्त्यनुरोधतः ॥ 43

अखण्डबिल्वपत्राणि कोमलानि नवान्यपि ।
सम्पाद्य श्रीमहादेवं पूजयध्वं प्रयत्नतः ।। 44

अनन्यशरणाः सन्तः पूजयध्वं महेश्वरम् ।
भस्मरुद्राक्षपूताङ्गाः शिवनाम्नैव सादरम् ।। 45

अनन्याः श्रीमहादेवं येऽर्चयन्ति प्रयत्नतः ।
(अनन्यया महादेवं भक्त्या सम्पूजयन्ति ये ।)
तेषामभीष्टमखिलं प्रयच्छति सदाशिवः ।। 46

अतोऽनन्या भवन्तोऽपि भजध्वं (भजन्तु) श्रीमहेश्वरम् ।
भवतामपि सुप्रीतो भविष्यति महेश्वरः ।। 47

अगस्त्यः (उवाच) -

इति तद्वचनं श्रुत्वा विष्णुब्रह्मपुरोगमाः ।
प्रहृष्टहृदयाः प्राहुर्हिमवन्तं शिवार्चकम् ।। 48

देवा ऊचुः -

अस्माकं श्रीमहेशान्यः पूज्योऽस्तीत्यस्ति किं मतिः ? ।
भवामो येन नानन्याः शिवान्योऽर्च्योऽस्ति किं मतिः ।।

अस्माकमापदुद्धर्ता सम्पद्दाता च शङ्करः ।
कः शिवान्योऽस्मदाराध्यो दुराराध्यो दुरात्मनाम् ।। 50

अस्माकं प्रभुराराध्यः पिता माता सखा सुहृत् ।
भ्राता च भगवानेको भवानीप्राणवल्लभः ॥ 51

महापद्दुःखमत्तेभकुम्भनिर्भेदनक्षमः ।
भगवान् शम्भुरेवैकस्तदन्योऽच्चर्यो न सर्वथा ॥ 52

अगस्त्यः उवाच -

इत्युक्त्वा ते सुराः सर्वे तत्रैव गिरिगह्वरे ।
मुने पार्थिवलिङ्गानां पूजां कर्तुं समुद्यताः ॥ 53

ततः पार्थिवलिङ्गानि कृत्वा विधिवदादरात् ।
विल्वपत्रप्रसूनाद्यैश्चक्रुः पूजां यथाक्रमम् ॥ 54

एवमेव सुराः सर्वे त्रिकालं वत्सरावधि ।
पूजां कृत्वा स्थितास्तत्र धृतपाशुपतव्रताः ॥ 55

तत्र श्रीमान्महादेवो ब्रह्मविष्ण्वादिपूजितः ।
कृतव्रतानां देवानां प्रत्यक्षोऽभूत्कृपानिधिः ॥ 56

देवदेवमुमाकान्तं नानाभरणभूषितम् ।
अचिन्त्यविभवं शुद्धमनिर्देश्यमनामयम् ॥ 57

सोमसूर्याग्निनयनं अनन्तगुणसेवितम् ।
अनन्तसोमसूर्याग्निप्रभाधिकमहाप्रभम् ॥ 58

कर्पूरगिरिसङ्काशमहावृषभसंस्थितम् ।
कर्पूरगौरं सर्वेशं विष्णवाद्या ददृशुः शिवम् ॥ 59

ततः प्रणम्य बहुधा पूजयित्वा च शङ्करम् ।
स्तोतुमारेभिरे भक्त्या विष्णुब्रह्मादयः सुराः ॥ 60

**देवा ऊचुः -**

भव हर नामस्मरणं
कृतमघकुलहरमतिशुभदम् ।
गिरीश महापज्जलधे-
रस्मानुद्धर धीर कृपाजलधे ॥ 61

स्मृतमपि (?) जय जय शम्भो
गिरिजाबन्धो जय जय शम्भो भूतपते ।
गिरीश महापज्जलधे
रस्मानुद्धर धीर कृपाजलधे ॥ 62

नामैवोत्तमं तव हर विमलं
मङ्गलदायकं मङ्गलदम् ।
गिरीश .... .... ॥ 63

तव पदकमलादमला
दन्यच्चिन्तितमपि न चेतसा शम्भो।
गिरीश .... .... ॥ 64

शिवमयमशिवं न भजाम-
स्त्वयि सति सशिवे शिवमूर्ते।
गिरीश .... .... ॥ 65

शिव सुरनायक मङ्गलविग्रह
कुरु कुरु मङ्गलमाशु विभो।
गिरीश .... .... ॥ 66

शरणं यामश्चरणद्वन्द्वं
तव कमलामलमनुवेलम्।
गिरीश .... .... ॥ 67

भगवन्भवता भवतापहृता
न हृतं दुरितं किं नु कृतम्।
गिरीश महापज्जलधे-
रस्मानुद्धर धीर कृपाजलधे॥ 68

सकृदपि तव हर नामस्मरणं
कृतमघकुलहरमतिशुभदम्।
गिरीश .... .... ॥ 69

स्मृतमपि हर तव चरणद्वन्द्वं

हरति विषादं किमु दृष्टम् (भवलब्धम्) ।

गिरीश .... .... ॥ 70

भव भवदीयानस्माननिशं

कुरु गतदुःखानतिदुःखान् ।

गिरीश .... .... ॥ 71

हर यद्यस्मत्कृतमपराधं

विविधं कृपया हरसि तदा ।

गिरीश .... .... ॥ 72

सुतमपराधिनमपि कृत-

शिक्षं जनकः पालयतीश तथा ।

गिरीश .... .... ॥ 73

न सुता वयमपि तव किं

शम्भो जनकः स भवानस्माकम् ।

गिरीश .... .... ॥ 74

जगतामेको जनकस्त्वमतो

वयमपि जगतो नहि भिन्नाः ।

गिरीश .... .... ॥ .... .... 75

भवता सृष्टाः सकला
लोका वयमपि तद्वद्धर सृष्टाः ।
गिरीश .... .... ॥ 76

भवता सृष्टं जगदिव सृष्टा-
नस्मानपि भव पालय नित्यम् ।
गिरीश .... .... ॥ 77

देव गजासुरपरिहृतविभवा-
नभयद सभयानव सदयम् ।
गिरीश .... .... ॥ 78

करुणापारावार-
स्त्वमतो हर सुरवर दुःखम् ।
गिरीश .... .... ॥ 79

शरणं भव शरणं भव
भव शरणं भव भव करुणाब्धे ।
गिरीश .... .... ॥ 80

भव भवदन्यं न वयं
यामः सकृदपि शरणं मरणे वा ।
गिरीश .... .... ॥ 81

न हि जानीमो भवदन्यं
शङ्कर धीरं वा पातारम् ।
गिरीश महापज्जलधे-
रस्मानुद्धर धीर कृपाजलधे ॥ 82

अगस्त्यः (उवाच) -

इति स्तुतो महादेवो विष्णुब्रह्मपुरोगमैः ।
प्रसन्नस्तानुवाचैवं घनगम्भीरया गिरा ॥ 83

महादेवः उवाच -

जानामि भवतां दुःखं ब्रह्मविष्णुपुरोगमाः ।
गजासुरं हनिष्यामि पश्यन्त्वद्याधुना ध्रुवम् ॥ 84

भवद्भिर्या कृता पूजा स्तुतिश्चेयं च या कृता ।
एताभ्यां स्तुति पूजाभ्यां तुष्टोऽस्म्यहमुमापतिः ॥ 85

भवत्कृतेन स्तोत्रेण यो मां स्तोष्यति सादरम् ।
स दुःखसागरं तीव्रं तरिष्यति न संशयः ॥ 86

अगस्त्यः -

इत्युक्त्वाऽमरबृन्देषु पश्यत्स्वेव महेश्वरः ।
शूलं गजासुरं हन्तुं प्रेषयामास सत्वरम् ॥ 87

ततो गजासुरं मत्तं शूलं वैकुण्ठवासिनम् ।
प्रविश्य पातयामास भूमौ शैलमिवोन्नतम् ॥ 88

गजासुरस्ततो भूमौ पपातोन्नतशैलवत् ।
तदा चकम्पे वसुधा सशैलवनकानना ॥ 89

गजासुरो यदा भूमावपतत्तच्छूलसंहतः ।
गर्तो महानभूद्भूमौ समुद्रास्सप्त(तत्र)संयुताः ॥ 90

भुवमेकार्णवां दृष्ट्वा भीतांश्च विबुधान्हरः ।
शूलात्तमसुरं भित्वा दधार गगनान्तरे ॥ 91

तदा सार्द्रीभवत्कृत्तिःक्षणं वस्त्रवदीश्वरे ।
तदा तच्छायया सर्वा सच्छाया भूरभून्मुने ॥ 92

ततः समाऽभवद्भूमिस्ततश्छित्वा गजासुरम् ।
खण्डशश्च ततः कृत्वा तं प्रदिक्षु वि(व्य)निक्षिपत् ॥ 93

ततो विष्ण्वादयो देवाः कृताञ्जलिपुटाः शिवम् ।
तुष्टुवुर्हृष्टहृदयाः शिपिविष्टमभीष्टदम् ॥ 94

**देवा ऊचुः -**

नमो नमः शरण्याय वरेण्याय नमो नमः ।
नमो नमो महेशाय महेष्वासाय ते नमः ॥ 95

नमो नमो गिरीशाय गिरिशाय नमो नमः ।
नमो नमो विरूपाय सुरूपाय नमो नमः ॥ 96

नमो नमो विदूराय दूरस्थाय नमो नमः ।
नमो नमो विनादाय सनादाय नमो नमः ॥ 97

नमो नमोऽस्तु मायेश मोहनाय नमो नमः।
नमो नमस्तापसाय तापहाय नमो नमः ॥ 98

नमो नमोऽस्तु मौञ्जाय मौञ्जायास्तु नमो नमः ।
नमो नमस्ते सोम्याय सोभ्यायास्तु नमो नमः ॥ 99

नमो नमस्ते पाराय सुपाराय नमो नमः ।
नमोऽस्तु ते महापार पारविन्दाय ते नमः ॥ 100

नमो नमस्ते रुद्राय चेकितानाय ते नमः ।
नमो नमः परेशाय परमेशाय ते नमः ॥ 101

नमो नमः शङ्कराय वृषारूढाय ते नमः ।
नमो नमोग्रशस्त्राय (नमस्त उग्रशस्त्राय)
शूलहस्ताय ते नमः ॥ 102

नमः कर्पूरगौराय नमोऽनन्तेन्दुतेजसे ।
नमो डमरुहस्ताय मृगहस्ताय ते नमः ॥ 103

नमो देवाधिदेवाय देवाधीशाय ते नमः ।
नमो भस्मविभूषाय सर्पभूषाय ते नमः ॥ 104

नमो निष्कलरूपाय निर्गुणाय नमो नमः ।
नमोऽमेयस्वरूपाय मानातीताय ते नमः ॥ 105

नमः शान्तस्वरूपाय वेदवेद्याय ते नमः ।
नमः कल्याणरूपाय कल्याणाय नमो नमः ॥ 106

नमो नमोऽमिताक्षाय मिताक्षाय नमो नमः ।
नमो नमः समाक्षाय विरूपाक्षाय ते नमः ॥ 107

नमः शिवासमेताय शिवरूपाय ते नमः ।
नमः शिवाय शुद्धाय नमः शिवतराय च ॥ 108

अगस्त्यः (उवाच) -

इति स्तुत्वा महादेवं प्रणम्य च मुहुर्मुहुः ।
पुष्पाद्यैः पूजयामासुर्ब्रह्मविष्णुपुरोगमाः ॥ 109

देवतासर्वभौमेन महादेवेन ते सुराः ।
निरीक्षिताः सानुमोदं तुष्टुवुः पुनरीश्वरम् ॥ 110

देवा ऊचुः -

सर्वेऽप्यनुगृहीताःस्मो वयमीश त्वयाऽधुना ।
कटाक्षवीक्षणेनेश वीक्षिताःस्मो यतो वयम् ॥ 111

धन्याः कृता वयं सर्वे त्वया देवोत्तम प्रभो ।
यस्तस(यतस)त्वया वयं सर्वे सानुमोदं निरीक्षिताः ॥ 112

दीनेष्वनन्यशरणेष्वस्मासु गिरिजापते ।
कृतमद्य त्वया शम्भो सानुमोदं निरीक्षणम् ॥ 113

जाता(:) कृतार्था मुनयस्त्वया ये ये निरीक्षिताः ।
जाताः कृतार्था वयमप्यतस्तव निरीक्षणात् ॥ 114

अनेन श्रीविरूपाक्षवीक्षणेनैव सर्वदा ।
अग्रेऽपि क्षेममस्माकं भविष्यति न संशयः ॥ 115

क्षेममूर्ते विरूपाक्ष मोक्षदानविचक्षण ।
प्राप्तव्यं क्षेममेवाग्रे श्रीविरूपाक्षकीर्तनात् ॥ 116

अगस्त्यः (उवाच) -

इत्युक्त्वा प्रणता देवा श्रीमहादेवपादुके ।
रत्नैः सम्पूजयामासुः सादरं शिवपादुके ॥ 117

दिव्यरत्नसमाकीर्णे श्रीमहादेवपादुके ।
देवाः स्वस्वकिरीटेषु निधाय ननृतुर्मुदा ॥ 118

विष्णुः स्वनेत्रे सम्पूज्य श्रीमहेश्वरपादुके ।
ततः किरीटे संयोज्य ननर्तादौ प्रहर्षितः ॥ 119

ततो ब्रह्मादयो देवा नेत्रे संयोज्य पादुके ।
ततः किरीटे संयोज्य ननृतुस्ते यथाक्रमम् ॥ 120

ततः परं महादेवो विष्ण्वादिभ्यो यथाक्रमम् ।
दत्वाधिकारान्प्रणतनान्प्रेषयामास तान् सुरान् ॥ 121

ततः स्वयमुमायुक्तो युक्तो नानाविधैर्गणैः ।
सुप्रापं प्राप कैलासं अप्राप्यमितरामरैः ॥ 122

ततो विष्ण्वादयः सर्वे कीर्तयन्तो महेश्वरम् ।
शिवप्रसादलब्धानि (दमालभ्य) स्वस्वस्थानानि संययुः ॥

देवैर्मृन्मयलिङ्गानि पूजितानि यतो मुने ।
ततः शिवः प्रसन्नोऽभूद्बभूवुश्च हतारयः ॥ 124

ततः प्राप्तपदाश्चासन्महादेवप्रसादतः ।
ददृशुश्च महादेवं देवा मृल्लिङ्गपूजया ॥ 125

मृल्लिङ्गपूजनं धन्यं यशस्यं भुक्तिमुक्तिदम् ।
सर्ववेदश्रुतं पुण्यं महापातकनाशकम् ॥ 126

महादेवार्चनास्थानान्यनेकानि मुनीश्वर ।
तेषु श्रेष्ठतमं स्थानं शिवलिङ्गे शिवार्चनम् ॥ 127

अलाभे शिवलिङ्गस्य शाङ्करे शङ्करार्चने ।
कर्तव्यं तदभावे तु पृथिव्यां पावकेऽप्सु वा ॥ 128

पूर्वंपूर्वस्थानलाभे तत्रैव शिवमर्चयेत् ।
पूर्वंपूर्वतमं स्थानं यतो मृत्युञ्जयप्रियम् ।। 129

आपो न परिरक्षीत तत्र कृत्वा शिवार्चनम् ।
कर्तव्यमतियत्नेन वत्सरान्तमिदं व्रतम् ।। 130

वत्सरान्ते रौद्रमन्त्रैस्तिलैःकार्यं शिवार्चनम् ।
तिलहोमोऽपि कर्तव्यः सहस्रत्रयमास्तिकैः ।। 131

शाङ्करेष्वपि विप्रश्चेल्लभ्यते शङ्करार्चनम् ।
तत्रैव कार्यं यत्नेन श्रीमहादेवपूजनम् ।। 132

तदभावे क्षत्रियाद्याः शाङ्कराः शिवसम्मताः ।
पूजास्थानानि विप्रेन्द्र साम्बस्य परमात्मनः ।। 133

शाङ्करेषु कृता पूजा शङ्करस्यैव पूजनम् ।
यस्मात्प्रियतमा विप्र शाङ्कराः शङ्करस्य ते ।। 134

शाङ्करे यद्धनं दत्तं तद्दत्तं शङ्करे मुने ।
शाङ्करे पूजिते साक्षात्पूजितः शङ्करो यतः । 135

शिवप्रेमास्पदं स्थानं शिवभक्तो यतो मुने ।
ततस्तत्र कृता पूजा शिवपूजेति मन्महे ।। 136

पुरा विष्णुः सुरैः साकं सुरशत्रुभयार्दितैः ।
ययौ शूरासुरं हन्तुं प्राप्तचक्रो महेश्वरात् ।। 137
[ततो गच्छन्पथि प्राप्तः शिवलिङ्गस्य पूजकः]

शिवलिङ्गमलब्ध्वा तं(सौ)दुःखितोऽभूत्सुरैः सह ।
तदा दैववशात्कश्चिच्छाङ्करो भस्मभूषणः ॥ 138

शिवलिङ्गाङ्कितततनुर्हृष्टो विष्ण्वादिभिः सुरैः ।
सन्तोषं परमं जग्मुस्ततो विष्ण्वादयः सुराः ॥ 139

तं दृष्ट्वा शाङ्करं विष्णुः प्रणम्य मुहुरादरात् ।
शाङ्करं पूजयामास शिवलिङ्गधिया तदा ॥ 140

तमर्चयित्वा विधिवच्छाङ्करं हरिरब्रवीत् ॥ 141

विष्णुः (उवाच) -

कुतः समागमः शैव कुत्र वा गन्तुमुद्यमः ।
भूतिभूषितदेहस्य रुद्राक्षाभरणस्य ते ॥ 142

दर्शनं जातमस्माकं सर्वमङ्गलदायकम् ।
प्रयाणकाले शैवस्य दर्शनं दुर्लभं यतः ॥ 143

प्रयाणकाले यः पश्येद्भूतिरुद्राक्षभूषणम् ।
तस्य सिध्यन्ति कार्याणि मङ्गलं च पदे पदे ॥ 144

यदेतच्छकुनं जातं शैव त्वद्दर्शनात्मकम् ।
तदेव बलमस्माकं सुरवैरिनिवर्हणे ॥ 145

विना भाग्येन महता शैवानां दर्शनं कुतः ।
भाग्येनास्माकमभवत्तव शैवस्य दर्शनम् ।। 146

यस्मिन्समर्चिते शैवे तुष्टो भवति शङ्करः ।
स शैवस्त्वं पुण्यमूर्तिर्भूतिरुद्राक्षभूषणः ।। 147

रुद्राक्षवलयो यस्माद्भूतिमान्स शिवालयः ।
तस्मिन्दृष्टे मङ्गलानि भविष्यन्ति पदे पदे ।। 148

धन्याः कृता वयं शैव त्वया दर्शनदानतः ।
शकुनं च त्वया दत्तमद्य दर्शनदानतः ।। 149

**शैव उवाच -**

भक्तोऽसि देवदेवस्य महादेवस्य केशव ।
शिवपूजा यतो नित्यं क्रियते सावधानतः ।। 150

अतः पदे पदे विष्णो विजयस्ते भविष्यति ।
जयो न दुर्लभो विष्णो शिवैकशरणस्य ते ।। 151

विजयी भव सर्वत्र शिवपूजापरो भव ।
शिवैकशरणानां तु विजयो नैव दुर्लभः।। 152

शिवैकशरणानां चेदजयः स्यात्तदा हरे ।
शिवप्रसादलभ्योऽयं जयः कस्य भविष्यति ।। 153

यः शिवानुगृहीतः स्यात्तस्यैव विजयो हरे ।
शिवाननुगृहीतानां भवत्यपजयो ध्रुवम् ॥ 154

शिवप्रसादलब्धेन चक्रेणानेन केशव ।
कुरु शत्रुक्षयं शीघ्रं लभस्व विजयं ततः ॥ 155

शिवभक्ताऽमलमते शिवभक्तार्चनप्रिय ।
श्रीशिवार्चनतः श्रीश विजई(यी)भव केशव ॥ 156

अगस्त्यः -

इत्युक्त्वा शाम्भवो भूयः पूजितो विष्णुना ततः ।
इन्द्रादिभ्य(भि)श्च यत्नेन पूजितः प्रययौ मुने ॥ 157

तस्मात्सर्वप्रयत्नेन शिवपूजा द्विजातिभिः ।
कर्तव्यैवाप्रमादेन प्रमादात्पतितो भवेत् ॥ 158

शिवलिङ्गार्चनं श्रौतं मनसापि न लङ्घयेत् ।
श्रुत्या विधीयते यस्मात्तत्यागी पतितो भवेत् ॥ 159

रुद्राक्षधारणं श्रौतं(श्रौतं) मनसापि न लङ्घयेत् ।
श्रुत्या .... .... ॥ 160

पञ्चाक्षरजपं श्रौतं मनसापि न लङ्घयेत् ।
श्रुत्या .... .... ॥ 161

रुद्राध्यायजपं श्रौतं मनसापि न लङ्घयेत् ।
श्रुत्या विधीयते यस्मात्तत्त्यागी पतितो भवेत् ।। 162

द्विजानां शिवपूजैव कर्तव्या यत्नपूर्वकम् ।
सर्वश्रुतिश्रुता नित्या सा यतः सर्वकामदा ।। 163

त्यक्त्वा शिवार्चनं मोहाच्छिवान्यं योऽर्चयिष्यति ।
स घोरनरकावासं लभते पितृभिः सह । 164

श्रुतं च सामशाखायां रुद्रो ब्रह्मणदैवतम् ।
त्वं देवेषु ब्राह्मणोऽसि रुद्रो ब्राह्मणदैवतम् ।। 165

रुद्रमेवोपधावेत ब्राह्मणो ब्राह्मणप्रियः ।
रुद्रमेवोपधावेत रुद्रान्यं नोपधावति ।। 166

स्वां देवतामतिक्रम्य रुद्रान्यं च यजेत यः ।
स पापी स्यात्परां सिद्धिं न लभत्ये(भेतै)व सर्वदा ।। 167

पुरा कश्चिदभूद्राजा पुण्यमूर्तिरिति श्रुतः ।
अर्थतोऽपि न नाम्नैव पुण्यमूर्तिः स भूपतिः ।। 168

तस्मिञ्छासति भूलोके पुण्यवन्तोऽखिला जनाः ।
सर्वे स्वधर्मनिरता बभूवुः सर्वदा मुने ।। 169

स पुण्यमूर्तिरालोड्य वेदान् शास्त्राणि सर्वदा ।
शैवधर्मरतो जातः पूर्वजन्मतपोबलात् ।। 170

स्वयमुद्धूल्य सर्वाङ्गं कृत्वा रुद्राक्षधारणम् ।
शिवलिङ्गार्चनं कृत्वा तिष्ठत्यासायमन्वहम् ॥ 171

प्रदोषकाले गौरीशं शिवलिङ्गस्वरूपिणम् ।
सम्पूज्य विधिवद्रात्रौ भुङ्क्ते नित्यं स भूपतिः ॥ 172

शिवलिङ्गार्चनं कुर्वन् शृण्वञ्छिवकथाः शुभः ।
भूपतिः क्षत्पिपासाभ्यामनाक्रान्तो बभूव सः ॥ 173

शिवनामान्यनामानि स न शुश्राव भूपतिः ।
शिवलिङ्गान्यपूजापि न कृता तेन सर्वथा ॥ 174

शतं पत्न्यः स्थितास्तस्य रूपलावण्यशोभनाः ।
ताभिः स कारयामास नित्यं नृत्तं शिवाङ्गणे ॥ 175

स रत्नैः कारयामास शिवस्थानं मनोहरम् ।
स तत्र स्थापयामास रत्नलिङ्गं मनोहरम् ॥ 176

स रत्नैरमितैः पुष्पैर्बिल्वपत्रैश्च कोमलैः ।
तद्रत्नलिङ्गमभ्यर्च्च धूपाद्यैश्च सम(मा)र्चयत् ॥ 177

शिवपूजारतो भूत्वा स यावत्संस्थितो भुवि ।
तावन्नाभूद्भुवि भयं दुर्भिक्षादिकृतं मुने ॥ 178

पित्रा न पुत्रमरणं दृष्टं तस्मिन्सति द्विज ।
नारी न विधवा जाता तस्मिन्शासति भूतले ॥ 179

तस्मिन्नेवं स्थिते भूपे कश्चित्षोडशवार्षिकः ।
मृतः सत्येव पितरि सर्वविद्याविशारदः ॥ 180

ततस्तं पुत्रमादाय मृतमेव हि तत्पिता ।
तस्यैव नृपतेर्द्वारि सकुटुम्बो रुदन् स्थितः ॥ 181

ततस्तद्रोदनं श्रुत्वा पुण्यमूर्तिः कृपानिधिः ।
तमुक्त्वा मारुदस्वे(इ)ति क्षणं चिन्तापरोऽभवत् ॥ 182

ततः स भूपतिः क्रुद्धो यमं सस्मार तत्क्षणम् ।
स यमोऽपि भयत्रस्तस्तं प्राप नृपतिं मुने ॥ 183

तमागतं कम्पमानं यमं संप्रेक्ष्य भूपतिः ।
कुटिलालकताम्राक्षो यममाहोग्रशासनः ॥ 184

राजोवाच -

पुत्रः पितरि सत्येव कथं वात्र मृतो यम ।
एतस्य मरणे हेतुः को वा तद्वद(तं वद)सत्वरम् ॥ 185

त्वयास्य मरणं काल न ज्ञातमिति न ध्रुवम् ।
अकाले काल बालोऽद्य कथं नीतस्त्वया वद ॥ 186

मत्प्रजास्वेवमन्यायप्रवृत्तिर्यदि ते मम(यम) ।
तदा तवाधिकारोऽयं न स्थास्यत्येव सर्वथा ॥ 187

कालमृत्युं च जेष्यामि श्रीमृत्युञ्जयपूजया ।
अकालमृत्युं जेष्यामीत्यत्र काल किमद्भुतम् ।। 188

अधुना पार्थिवं लिङ्गं समभ्यर्च्य यथाविधि ।
यम साक्षात्करिष्येऽहं मृत्युञ्जयमुमापतिम् ।। 189

मृत्युञ्जयमुमाकान्तं प्रत्यक्षीकृत्य सत्वरम् ।
तवाधिकारमन्यस्मै दापयिष्याम्यहं यम ।। 190

मामन्यतुल्यं मत्वा त्वं यमान्यायं करोषि किम् ।
ज्ञात एव न किं काल प्रभावः शाङ्करस्य मे ।। 191

बहुभिः शाङ्करैः पूर्वमुपेन्द्रादिदिवौकसाम् ।
अधिकाराः क्षणार्धेन क्रूरैर्दूरीकृता यम ।। 192

शाङ्कराणामशक्योऽर्थो नास्ति लोकत्रयेऽप्यतः ।
यमाधिकारव्यत्यासं करिष्ये तव सर्वथा ।। 193

ममोपेन्द्रादयोऽप्यद्धा गणनीया न वस्तुतः ।
एतादृशस्य मे काल गणनीयोऽस्ति किं भवान् ।। 194

**अगस्त्यः (उवाच) -**

इति तद्वचनं श्रुत्वा कृतान्तः कम्पमावहन् ।
कृताञ्जलिपुटो भूत्वा प्राह वाचं विचक्षणः ।। 195

**यमः (उवाच) -**

पुण्यमूर्ते त्वयोक्तं यत्तत्सर्वं सत्यमेव हि ।
शाङ्कराणामशक्यार्थो न भविष्यति सर्वथा ।। 196

मया मरणमेतस्य ज्ञायते नात्र संशयः ।
मरणे हेतुरप्यस्य ज्ञायते स मयोच्यते ।। 197

भूपास्मिन्नगरे विप्रः कश्चिदासीदशाङ्करः ।
स शिवानर्चनरतो ज्ञातोऽद्यैव भ्रमावृतः(कुलः) ।। 198

ऊर्ध्वपुण्ड्रं मृदा कृत्वा श्रौतधर्मविवर्जितः ।
तिष्ठत्यत्रात एवात्र जातो धर्मविपर्ययः ।। 199

यस्मिन्देशे भवेद्विप्रः श्रौतधर्मविवर्जितः ।
तस्मिन्देशे मरिष्यन्ति पुत्राःपितरि सत्यपि
(पितृषु सत्स्वपि) ।। 200

अन्यान्यपि भयान्येवं श्रौतधर्मविपर्यये ।
भविष्यन्ति न सन्देहो दुर्भिक्षादीन्यपि प्रभो ।। 201

यस्मिन्देशे भवेद्भूप श्रौतधर्मविपर्ययः ।
तद्देशनाशो बहुधा भवत्येव न संशयः ।। 202

व्याधिवृद्धिरनारोग्यं प्रजापीडा प्रजाक्षयः ।
आर्तिश्च जायते राजन् श्रौतधर्मविपर्ययः ।। 203

अल्पायुरप्यनावृष्टिश्चोरवृद्धिर्धनक्षयः ।
हानिश्च भवति स्वामिन् शैवधर्मविपर्यये ।। 204

अशैवैः सह संयोगं ये करिष्यन्ति मोहतः ।
तेषां भवत्यनायुष्यं पापवृद्धिश्च भूपते ।। 205

पापमूर्तेरशैवस्य दर्शनस्पर्शनादिकम् ।
ये करिष्यन्ति मोहेन तेषामापद्भविष्यति ।। 206

वरं मद्यपसंसर्गो वरमन्त्यजसङ्गमः ।
शैवधर्मपरिभ्रष्टसङ्गमो न वरं नृप ।। 207

यदिच्छसि प्रजाक्षेमं स्वस्यापि क्षेममन्वहम् ।
अशैवं विषयादस्मान्निष्कासय नराधिप ।। 208

तेन द्विजशिशोः प्राणाः समायास्यन्ति सत्वरम् ।
बालकोऽयं मृतः सद्यः प्राणान्सन्धारयिष्यति ।। 209

अगस्त्यः (उवाच) -

इति तद्वचनं श्रुत्वा स राजा दृढनिश्चयः ।
सद्यो निष्कासयामास तमशैवं विषयात्स्वकात् ।। 210

तस्मिन्विवासितेऽशैवे राज्ञा स्वविषयाद्द्रुतम् ।
सप्राणः समभूत्सद्य उदतिष्ठच्च बालकः ।। 211

ततः प्रधानमाहूय स राजा धर्मतत्परः ।
कृतान्ते शृण्वति तदा प्राह लोकहितं वचः ॥ 212

राजोवाच -

भविष्यन्त्यत्र ये केचिदूर्ध्वपुण्ड्रधरा जनाः ।
ते विवास्या द्रुतं देशादस्माच्छैवपराङ्मुखाः ॥ 213

भविष्यन्त्यत्र ये केचित्त्रिपुण्ड्रानङ्किता जनाः ।
तेषां विवासनं राष्ट्रात्कर्तव्यमविशङ्कया ॥ 214

भविष्यन्त्यत्र ये केचिच्छिवान्यसुरपूज्का: ।
तेषां विवासनं .... .... ॥ 215

भविष्यन्त्यत्र ये केचिद्रुद्राक्षानङ्किता जनाः ।
तेषां विवासनं .... .... ॥ 216

भविष्यन्त्यत्र ये केचिच्छिवान्यसुरपूजकाः ।
तेषां विासनं .... .... ॥ 217

भविष्यन्त्यत्र ये केचित्त्यक्तलिङ्गार्चना जनाः ।
तेषां विवासनं .... .... ॥ 218

भविष्यन्त्यत्र ये केचिच्छ्रीरुद्रजपवर्जिताः ।
तेषां विवासनं .... .... ॥ 219

भविष्यन्त्यत्र ये केचित्पञ्चाक्षरपराङ्मुखाः ।
तेषां विवासनं .... .... ॥ 220

अन्येषु शैवधर्मेषु येषां चित्तं पराङ्मुखम् ।
तेषां विवासनं .... .... ॥ 221

इमामाज्ञां मया दत्तां यद्येको लङ्घयिष्यति ।
तदा तव शिरश्छेदं करिष्ये नात्र संशयः ॥ 222

अशैववार्ता मद्राज्ये यदि संश्रूयते मया ।
तदा तव शिरश्छेदं करिष्ये नात्र संशयः ॥ 223

अगस्त्यः (उवाच) -

एवं प्रधानमाज्ञाप्य शैवबुध्या यमं ततः ।
पूजयामास नृपतिः शैवधर्मपरायणः ॥ 224

यमोऽपि तं महीपालं शिवधर्मपरायणम् ।
पूजयामास पुष्पाद्यैः शैवोऽयमिति सादरम् ॥ 225

पुनः सम्पूजितस्तेन नृपेण स यमो मुने ।
ययौ प्रहृष्टवदनः स नृपो निजमन्दिरम् ॥ 226

अत एव महादेवः पूजनीयो महर्षिभिः ।
समर्चयन्त्युमाकान्तमिन्द्रोपेन्द्रादयः सुराः ॥ 227

अत्यन्तश्रद्धया देवं येऽर्चयन्ति महेश्वरम् ।
तेषामायुष्यमारोग्यमपवर्गश्च जायते ॥ 228

पुण्या शिवा शिवः पुण्यः पुण्यं तिर्यक्त्रिपुण्ड्रकम् ।
शिवलिङ्गार्चनं पुण्यं पुण्यमानन्दकाननम् ॥ 229

एतत्प्रातः समुत्थाय स्मर्तव्यं पुण्यपञ्चकम् ।
स्मरणेनास्य सततं जायते पुण्यवान्नरः ॥ 230

उमासहायमित्यादिवेदमन्त्रैः शिवः प्रगे ।
स्मर्तव्यः सततं विप्रैः सर्वसिध्यर्थमादरात् ॥ 231

शिव शङ्कर गौरीश विश्वनाथ महेश्वर ।
देवोत्तमेति नामानि प्रातर्जप्यानि सज्जनैः ॥ 232

भवानी स्कन्दजननी गौरी शङ्करवल्लभा ।
शिवेति प्रातरुत्थाय स्मर्तव्या जगदम्बिका ॥ 233

प्रातः कालान्यकालेऽपि शिव शम्भो महेश्वर ।
महादेवेति नामानि जपनीयानि सज्जनैः ॥ 234

स्मर्तव्यः कीर्तनीयश्च जपनीयश्च शङ्करः ।
यतस्तत्स्मरणादीनि मुक्तिदानि महामुने ॥ 235

तन्मनो येन मनसा स्मर्यते पार्वतीपतिः ।
सा जिह्वा कीर्त्यते साम्बः सततं जिह्वया यया ॥ 236

स हस्तो येन हस्तेन बिल्वैः सम्पूज्यते शिवः ।
तच्छिरो येन शिरसा नम्यते भगवान् शिवः ॥ 237

तौ पादौ यौ शिवक्षेत्रे भक्त्या पर्यटतो मुदा ।
स पुण्यो येन वा काश्यां स्वशरीरं समर्पितम् ॥ 238

पद्भ्यां प्रदक्षिणाः कार्याः सावधानं शिवालये ।
हस्ताभ्यां अतियत्नेन कर्तव्यं शङ्करार्चनम् ॥ 239

प्रणामाः स्वशरीरेण कर्तव्याः पार्वतीप्रभोः ।
श्रोत्राभ्यामतियत्नेन श्रोतव्याः शाङ्कराः कथाः ॥ 240

नेत्राभ्यामतियत्नेन द्रष्टव्यः पूजितः शिवः ।
घ्राणेन घ्रेयममलं बिल्वपत्रं शिवार्पितम् ॥ 241

जिह्वया श्रीमहादेवः कीर्तनीयः प्रयत्नतः ।
स्प्रष्टव्यं शिवलिङ्गं च श्रद्धया यत्समर्चितम् ॥ 242

ध्यातव्यो मनसा नित्यमुमादेहार्धविग्रहः ।
वेदवेदान्तसंवेद्यः सर्वदा श्रीसदाशिवः ॥ 243

इन्द्रियैः षड्भिरप्यार्यास्तत्तदिन्द्रियकर्मभिः ।
शिवमेवानिशं भक्त्याऽऽराधयन्ति मुमुक्षवः ॥ 244

यजन्ते विविधैर्यज्ञैः शिवमेव हि याजिनः ।
यतो देवाधिदेवोऽयं यज्ञकर्मफलप्रदः ॥ 245

चिन्तयन्ति महादेवं योगिनो युक्तमानसाः ।
यतो देवाधिदेवोऽयं योगकर्मफलप्रदः ॥ 246

शिवात्परतरं नेति ये भजन्ति महेश्वरम् ।
ते धन्यास्ते सदाचारास्ते पूज्या धर्ममूर्तयः ॥ 247

शिवनाममणिं कण्ठे सदा सन्धारयन्ति ये ।
ते धन्या .... .... ॥ 248

सन्धारयन्ति ये शुद्धं त्रिपुण्ड्रं शिवभूषणम् ।
ते धन्यास्ते सदाचारास्ते पूज्या धर्ममूर्तयः ॥ 249

येषां देवगणाधीशो महेशः कुलदैवतम् ।
ते धन्यास्ते .... .... ॥ 250

येषां सर्वार्थदं नित्यं व्रतं शङ्करपूजनम् ।
ते धन्यास्ते .... .... ॥ 251

येषां शिवार्चनादन्यद्व्रतं नास्त्येव सर्वथा ।
ते धन्यास्ते .... .... ॥ 252

येषां शिवान्यदेवेषु शिवभक्तत्वधीः सदा ।
ते धन्यास्ते .... .... ॥ 253

येषां महेश्वरे साम्बे सर्वदेवोत्तमत्वधीः ।
ते धन्यास्ते .... .... ॥ 254

येषां चित्तं परावृत्तं महादेवान्यदर्शनात् ।
ते धन्यास्ते सदाचारास्ते पूज्या धर्ममूर्तयः ।। 255

कर्मणा मनसा वाचा नित्यमव्यभिचारतः ।
यः पूजयेन्महारुद्रं स मोक्षमधिगच्छति ।। 256

मुने शिवार्चनादन्यो मोक्षोपायो न विद्यते ।
ततः सर्वप्रयत्नेन पूजनीयः सदाशिवः ।। 257

सर्वात्मकोऽपि भगवान् लिङ्गरूपी सदाशिवः ।
पूजनीयः प्रयत्नेन मुने स्वर्गापवर्गदः ।। 258

ध्यातव्यः पूजनीयश्च लिङ्गरूपी सदाशिवः ।
ध्यातः सम्पूजितः शम्भुः सर्वाभीष्टान्प्रयच्छति ।। 259

स्वभीप्सितार्थदो देवः शिवान्यो नास्ति सर्वथा ।
सत्यमेतत्पुनः सत्यमुद्धृत्य भुजमुच्यते ।। 260

न शिवान्यः पूजनीयो न ध्यातव्यो मुमुक्षुभिः ।
सत्यमेतत् .... .... ।। 261

न शिवान्यः कीर्तनीयो न स्तोतव्यो मुमुक्षुभिः ।
सत्यमेतत् .... .... ।। 262

पूजनं कीर्तनं ध्यानं वन्दनं तु शिवापतेः ।
आयुरारोग्यसम्पत्तिशुभस्वर्गापवर्गदम् ।। 263

प्रत्येकं पूजनादीनि सर्वाभीष्टप्रदान्यतः ।
पूजनादीनि कार्याणि महादेवाय सर्वदा ॥ 264

मुने धन्यास्त एवेति ज्ञेयाः स्वप्नेऽपि ये सदा ।
पूजयन्ति महादेवं शिवान्यार्चापराङ्मुखाः ॥ 265

मुने धन्यास्त एवेति .... .... ।
श्रीमहादेवयात्रार्थमुपयुक्ता ये प्रहर्षिताः ॥ 266

मुने धन्यास्त एवेति ज्ञेयाः स्वप्नेऽपि ये सदा ।
शिवान्यनामश्रवणे महाबधिरवृत्तयः ॥ 267

मुने धन्यास्ते .... .... ।
शिवान्यकीर्तनस्तोत्रे ये मूकैकप्रवृत्तयः ॥ 268

यः पूज्यं श्रीमहादेवमनभ्यर्च्यान्यमर्चयेत् ।
स नित्यभ्रान्त एवेति विज्ञेयो नात्र संशयः ॥ 269

यः शिवाराधनं त्यक्त्वा करोत्यन्यसुरार्चनम् ।
स करोति नरो मोहाद्वृथैव स्वायुषः क्षयः(यम्) ॥ 270

यावत्स्वस्वान्तमभ्रान्तं यावन्नैवायुषःक्षयः ।
तावदेवोत्तमः साम्बः पूजनीयः स्वशक्तितः ॥ 271

मुने ये(य) एवमज्ञात्वा कुर्वन्तीशान्यपूजनम् ।
ते तु कालभटैर्नीता रुदन्ति च पुनः पुनः ॥ 272

शिवान्यपूजका ये च ये च त्यक्तत्रिपुण्ड्रकाः ।
ते सर्वेऽपि पतन्त्येव नरकेषु पुनः पुनः ॥ 273

नित्यं शिवार्चनं त्यक्त्वा शिवान्यं येऽर्चयन्ति तान् ।
नरके पातयत्येव कृतान्तः क्रूरशासनः ॥ 274

शिवध्यानविहीना ये ह्यन्यं ध्यायन्ति ये च तान् ।
नरके .... .... । 275

नित्यं शिवस्तुतिं त्यक्त्वा ये शिवान्यं स्तुवन्ति तान् ।
नरके .... .... ॥ 276

अशैवधर्ममाश्रित्य ये तिष्ठन्ति द्विजादयः ।
नरके .... .... ॥ 277

शिवधर्मान् श्रुतिप्रोक्तान्नाचरिष्यन्ति ये द्विजाः ।
ते मृत्युपाशसम्बद्धाः स्थास्यन्ति नरकालये ॥ 278

अतोऽदयं यमं ज्ञात्वा शैवो भूत्वा प्रयत्नतः ।
यः पूजयति गौरीशं स मोक्षमधिगच्छति ॥ 279

कुर्वन्ति कोटिशो नित्यं महेशान्यसुरार्चनम् ।
तथापि दुर्लभो मोक्षो विना शङ्करपूजया ॥ 280

कुर्वन्तु कोटिशो यागान् धर्मांश्चान्यान्सनातनान् ।
तथापि श्रीविरूपाक्षपूजां मोक्षस्त्वपेक्षते ॥ 281

सुकृतामितपुण्योऽपि विना शङ्करपूजया ।
न मुक्तिकान्तां लभते सत्यं सत्यं न संशयः ।। 282

यः पूजितः स्तुतो ध्यातो वन्दितोमेशविग्रहः
(येन ध्यातः शिवो यस्तु वन्दितोमेशविग्रहः ।)
स एव लभते धन्यो मुक्तिकान्ताकरग्रहम् ।। 283

विलोकयन्ति सततं मुक्तिकान्तां शिवार्चकाः ।
सापि पश्यति सोत्साहं शिवाराधनतत्परान् ।। 284

मुक्त्यङ्गना विलोक्यैव शिवाराधनतत्परम् ।
नृत्यत्यत्यन्तसन्तुष्टा वल्लभोऽयं ममेति सा ।। 285

स एव सततं ध्यात्वा पार्वतीप्राणवल्लभः (भम्) ।
स एव शैवः शुद्धात्मा जायते मुक्तिवल्लभः ।। 286

स एवातिप्रयत्नेन समाराधितशङ्करः ।
स एव वस्तुतो लोके मुक्तिकान्तामनोहरः ।। 287

महेश्वरमुमाकान्ता(न्तं) कालान्तकमनामयम् ।
यः पूजयति तस्यैव मुक्तिर्नान्यस्य सर्वथा ।। 298

स्नात्वादौ भस्मना देहमुद्धूल्यापादमस्तकम् ।
पूजनीयो महादेवो लिङ्गरूपी मुमुक्षुभिः ।। 289

एवमव्यभिचारेण नित्यमभ्यर्चितः शिवः ।
ददाति भुक्तिं मुक्तिं च सत्यं सत्यं न संशयः ।। 290

ऐश्वर्यमतुलं भुक्त्वा शिवलिङ्गार्चनान्मुने ।
प्रयाति शिवसायुज्यं निर्दग्धाखिलकल्पषा:(ष:) ॥ 292

कोटिश: कृतपापोऽपि सकृदर्चितशङ्कर: ।
प्रयाति शिवसायुज्यं पुनरावृत्तिवर्जितम् ॥ 293

शिवपूजाग्निसन्दग्धमहापातकपर्वता: ।
पीतामृताशुचिर्भूता: (पीतामृता: शिवात्मान:)
शिवं यान्ति शिवाहृता: ॥ 294

समभ्यर्च्य महादेवं सकृदप्याहिताशया: ।
लब्ध्वोपेन्द्रत्वमिन्द्रत्वं ब्रह्मत्वं च शिवं युयु: ॥ 295

पुरा द्विजाधम: कश्चित्त्यक्तब्राह्मणलक्षण: ।
निन्द्यां वृत्तिं समाश्रित्य तस्थौ स्वकुलनिन्दित: ॥ 296

स ततश्चोरधर्मेण धनं सम्पाद्य कोटिश: ।
सदा वेश्यापरो जातो मधुमांसाशन: सदा ॥ 297

स वेश्याभुक्तशिष्टाशी वेश्यासंसक्तमानस: ।
उवास मदनाक्रान्तो वेश्यया सह सर्वदा ॥ 298

स्वगत: स्वोपभोगार्थं पुष्पाण्यानेतुमुद्यत: ।
प्रविवेश च यत्नेन मनोज्ञां पुष्पवाटिकाम् ॥ 299

तत: सम्पाद्य पुष्पाणि सुगन्धीनि बहूनि च ।
अन्धकारे च सम्प्राप्ते मध्येमार्गमुपागत: ॥ 300

तदा समुत्थितो वायुः समेधो वृक्षघातुकः ।
ततो बभूव वृष्टिश्च धनगर्जनसंयुता ।। 301

ततः परं स पुष्पाणि त्यक्त्वा वृष्टिजलाप्लुतः ।
ममार(?) वात्यया तत्र कोमलाङ्गः सनातनः ।। 302

तदा तत्त्यक्तपुष्पाणि पेतुर्लिङ्गस्य मूर्धनि ।
ततो वृष्टिरभूच्छान्ता ततः शान्ताश्च वायवः ।। 303

ततस्तं मृतमालोक्य तमापुर्यमकिङ्कराः ।
नीतश्च तैः स दुर्वृत्तस्तदैव यमसन्निधिम् ।। 304

ततः समागतं दृष्ट्वा धर्मो धर्मविचक्षणम् ।
चित्रगुप्तं विलोक्याह धर्माधर्मविचारकम् ।। 305

धर्म उवाच -

किमनेन कृतं कर्म कोऽयं किङ्कुलसम्भवः ।
किमेतस्याद्य कर्तव्यं शासनं तद्वदस्व मे ।। 306

अगस्त्यः उवाच -

इति तद्वचनं श्रुत्वा चित्रगुप्तः कृताञ्जलिः ।
धर्माधर्मौ विदित्वैव तत्कृतौ प्राह तं यमम् ।। 307

चित्रगुप्तः (आह) -

अयं द्विजकुलोत्पन्नो द्विजधर्मविवर्जितः ।
वेश्योच्छिष्ठभुगुद्वृत्तो नानापातकसंश्रयः ॥ 308

अनेन न कृतं कर्म स्वर्गभोगादिसाधनम् ।
एतत्कृतानां पापानां सङ्ख्या कर्तुं न शक्यते ॥ 309

बहुधा यातनाऽनेन भोक्तव्या नात्र संशयः ।
अनेनैताहृशेनापि लिङ्गे पुष्पाणि भाग्यतः ॥ 310

मृत्योः पूर्वं सुगन्धीनि पातितान्ययुतत्रयम् ।
स्वभोगार्थं सुगन्धीनि मल्लिकाकुसुमान्ययम् ॥ 311

नीत्वा स्थितस्ततो वृष्टया वात्याभिश्च प्रपीडितः ।
पीडितः पातयामास तानि पुष्पाण्ययं द्विजः ॥ 312

तानि पेतुर्दैवयोगाच्छिवलिङ्गस्य मूर्धनि ।
ततः परमयं काल मृत एव हि पीडया ॥ 313

ततः परं यमभटैरानीतोऽयं तवान्तिकम् ।
इतोऽधिकं पुरानेन न कृतं सुकृतार्जनम् ॥
अनेन सुकृतेनैव मुक्तिरस्य भविष्यति ॥ 314

अगस्त्यः उवाच -

इति तद्वचनं श्रुत्वा यमः सन्तुष्टमानसः ।
तं तदाऽत्यन्तयत्नेन पूजयामास सादरम् ॥ 315

पूज्यमानं तमालोक्य तदा यमसभासदः ।
यममूचुः स्मयाविष्टाः कृताञ्जलिपुटा मुने ॥ 316

सभासद ऊचुः -

यमानेन कृतं पुण्यं न किञ्चिदपि दृश्यते ।
विहितान्यपि कर्माणि न कृतान्यमुना स्वयम् ॥ 317

कथमस्यातिदुष्टस्य क्रियते पूजनं त्वया ।
कथं धर्मस्त्वया ज्ञातो धर्मवित् त्वं कथं त्विदम् ॥ 318

यम उवाच -

दैवाद्वा यत्नतो वापि शिवलिङ्गस्य मूर्धनि ।
पतितानि प्रसूनानि भवन्त्येव हि मुक्तये ॥ 319

शुद्धं यः पातयेत्पुष्पमेकं वा शिवमूर्धनि ।
स तरत्येव संसारमन्तकाले शिवं व्रजेत् ॥ 320

विवशेनापि संस्पृष्टो यथा दहति पावकः ।
तथैव विवशोऽपीशं सम्पूज्यान्ते शिवं व्रजेत् ॥ 321

प्रसूनमेकमेवास्मात्पतितं शिवमूर्धनि ।
एतत्कुलाघसङ्घानि नाशयामास तत्क्षणे ॥ 322

यान्यन्यानि प्रसूनानि पातितानि शिवोपरि ।
तान्यस्य मुक्तिं दास्यन्ति ब्रह्मादीनां पदान्यपि ।। 323

अतः परमयं भूयो भावि(वी)भूमावयोनिजः ।
नवखण्डात्मिकां भूमिं पालयिष्यति धर्मतः ।। 324

अस्य पुत्रा भविष्यन्ति दशलक्षं महौजसः ।
शिवस्थानान्ययं भूपः कारयिष्यति भूरिशः ।। 325

शिवलिङ्गान्ययं तेषु स्थापयिष्यति सादरम् ।
शिवार्चनपरो भूत्वा शैवानभ्यर्चयिष्यति ।। 326

अयं ततः परं राज्यं पुत्रेषु स्थापयिष्यति ।
ततस्तेनैव देहेन देवेन्द्रोऽपि भविष्यति ।। 327

ततः परमयं ब्रह्मा स्वयमेव भविष्यति ।
गाणपत्यं ततो लब्ध्वा भक्त्या शङ्करपूजया ।। 328

लब्ध्वा शिवप्रसादं च शिवे लीनो भविष्यति ।
मरणात्पूर्वसमये श्रीमहादेवमूर्धनि ।। 329

पुष्पाणि पातयित्वापि मुक्तो भवति मानवः ।
मरणात्पूर्वसमये शिवं सम्पूज्य यत्नतः ।। 330

व्यवधानं विना मर्त्यः शिवे लीनो भविष्यति ।
अन्तकाले बिल्वपत्रे पातिते शिवमूर्धनि ।। 331

तदा त्वव्यवधानेन शिवे लीनो भविष्यति।
मरणात्पूर्वसमये विल्वपत्रेण शङ्करम् ।। 332

यः पूजयति यत्नेन स शिवो भवति ध्रुवम् ।
विना यज्ञैर्विना दानैस्तपोभिश्च विना शिवम् ।। 333

सम्पूज्य बिल्वपत्रेण प्राप्तानन्दाः शिवाः ध्रुवम् ।
अनन्तान्यपि पापानि नश्यन्ति शिवपूजया ।। 334

ततः प्रयाति च शिवं तयैव शिवपूजया ।
अनन्तोत्तमगोदानभूदानानां च यत्फलम् ।। 335

ततोऽनन्तगुणं पुण्यं शिवपूजाविधेः फलम् ।
अनन्तमत्तमातङ्गदानानामपि यत्फलम् ।। 336

ततोऽनन्तगुणं .... .... ।
शिवपूजाकल्पवृक्षः स्वेष्टानन्तफलप्रदः ।। 337

ततः सा सर्वदा कार्या शिवपूजा मुमुक्षुभिः ।
शिवार्चनफलं यावत्तावत्फलमनेकधा ।। 338

कृतैरप्यमृ(मि)तैर्धर्मैर्नैव संप्राप्यते ध्रुवम् ।
विनापि यज्ञदानाद्यैः केवलं शिवपूजया ।। 339

मुक्ता भवन्ति मनुजास्त्यक्तपातकपञ्जराः ।
पापिनोऽपि शिवं यान्ति नूनं कृतशिवार्चनाः ।। 340

न तपोमूर्तयोऽपीशं यान्ति त्यक्तशिवार्चनाः ।
[1]वृथा तपो वृथा दानं धर्माश्च विविधा वृथा ॥ 341

किन्त्वेकं सार्थकं श्रौतं श्रीमहादेवपूजनम् ।
शिवे दत्तमयत्नेनाप्येकं बिल्वदलं नवम् ॥ 342

विना धर्मान्तरापेक्षां मोक्षदं भवति ध्रुवम् ।
सम्प्राप्य महदैश्वर्यमिन्द्रत्वादिपदान्यापि ॥ 343

बहुभिः शिवसायुज्यं प्राप्तं शङ्करपूजया ।
सकृदप्यर्चितो भक्त्या महेशः करुणानिधिः ॥ 344

ददात्यतुलमैश्वर्यं स्वसायुज्यं च शाश्वतम् ।
सुते पितेव तनुते प्रीतिमीशः स्वपूजके ॥ 345

ततो ददाति सुप्रीतः शिवस्तद्वाञ्छितं फलम् ।
तोयेन बिल्वपत्रेण पूतेनैकेन वा शिवम् ॥ 346

यः पूजयति सश्रद्धं तस्य मुक्तिरदूरतः ।
यः पश्येत्क्रूरया दृष्ट्या मोहात् शङ्करपूजकम् ॥ 347

---

1 शिवपूजामहत्वे एव तात्पर्यं शिवरहस्यनिबद्धः न तु वेदविहित-तपोदानादिधर्मान्तराचरणनिषेधे तद्वैयर्थ्यकथने च ॥

स तिष्ठेन्नरकेऽवश्यं यावदाचन्द्रतारकम् ।
धन्यं धन्यं महादेवपूजकस्यैव जीवनम् ।। 348

यो भुक्त्वा विविधान्भोगान्मुक्तिमन्ते समश्नुते ।
तस्यैव जनको मान्यो यस्य पुत्रः शिवार्चकः ।। 349

तस्यैव जननी मान्या सुषुवे या शिवार्चकम् ।
तस्य धन्यतरो वंशो यत्र जातः शिवार्चकः ।। 350

तद्वंशजन्या धन्या हि यद्वंशे शङ्करार्चकाः ।
नृत्यन्ति पितरस्तस्य यस्य वंशे शिवार्चकः ।। 351

कदाचिदपि गौरीशं पयसा योऽभिषिञ्चति ।
तस्येह जननीस्तन्यं भविष्यति सुदुर्लभम् ।। 352

नरा भवन्ति निष्पापा दृष्ट्वापि शिवपूजकम् ।
अतः शिवार्चको धन्यो भाग्यवांश्च न संशयः ।। 353

शिवार्चनेन यल्लभ्यं तल्लभ्यं नान्यधर्मतः ।
यदन्यधर्मतो लभ्यं तल्लभ्यं शिवपूजया ।। 354

शिवार्चकास्त्रिपुण्ड्राङ्काः शिवपारिषदाः दोऽमलाः
(दाः शुभाः) ।
नमो नमः शाम्भवेभ्यः शाम्भवेभ्यो नमो नमः ।। 355

नमो नमः शाम्भवेभ्यः पुनर्भूयो नमो नमः ।
भुव्यन्तरिक्षे पाताले ये भविष्यन्ति शाम्भवाः ॥ 356

तेभ्यो नमो नमो नित्यं नमो नित्यं नमो नमः ।
अस्माभिरेते दृश्यन्ते भाग्येन शिवपूजकाः ॥ 357

भूरिभाग्यं विनाऽस्माकं कुतः शाम्भवदर्शनम् ।
अनन्तदानधर्माणामनन्ततपसामपि ॥ 358

फलं श्रुतिश्रुतं साक्षादन्तकाले शिवार्चनम् ।
येन केनापि रूपेण यस्य कस्यापि देहिनः ॥ 359

यद्यन्ते शिवपूजा स्यात्स मुक्तो भवति ध्रुवम् ।

अगस्त्यः उवाच -

इति तद्वचनं श्रुत्वा तदा यमसभासदः ।
तं प्रणम्यातियत्नेन चक्रुः पूजां विधानतः ॥ 360

ततः स जातो भूपालो महेन्द्रादिपदान्यपि ।
सम्प्राप्य शिवसायुज्यं लेभे शम्भोः प्रसादतः ॥ 361

अतोऽन्वहं प्रयत्नेन कर्तव्यं शिवपूजनम् ।
स्मर्तव्यश्च महादेवः सावधानेन सन्ततम् ॥ 362

दधीचिः उवाच –

इत्यगस्त्यवचः श्रुत्वा तमगस्त्यं सनातनः ।
प्रणम्य विधिवत्तस्मै चकाराभ्यर्चनं मुदा ॥ 363

स ततस्तदनुज्ञातो श्रीमध्यार्जुननायकम् ।
द्रष्टुं ययौ बिल्वपाणिर्हृष्टचित्तो नृपोत्तम ॥ 364

ततः सनातनो भक्त्या चकारोग्रं तपो महत् ।
उद्धूलनत्रिपुण्ड्राभ्यां भूषितः शिवपूजकः ॥ 365

ततः प्रसन्नो भगवान् तस्मै देवोत्तमः शिवः ।
प्रसन्ने सति गौरीशे तुष्टावाभ्यर्च्य शङ्करम् ॥ 366

वरं ययाचे तदनु काशीं प्रापय शाङ्करीम् ।
वरोऽयमुत्तमः शम्भो नाहं याचे वरान्तरम् ॥ 367

इत्युक्तमतिभक्तस्य श्रुत्वा वचनमीश्वरः ।
तथास्त्विति तमुक्त्वेशस्तत्रैवान्तरधीयत ॥ 368

स बालकोऽप्यगस्त्यस्य श्रुत्वा वचनमादरात् ।
ततः सनातनः प्राप कशीं विश्वेश्वराश्रयाम् ॥ 369

सम्प्राप्य भक्त्यो तत्रैव विश्वेशानुग्रहान्नृप ।
श्रद्धया विदधे नित्यं मृत्तिकालिङ्गपूजनम् ॥ 370

स तु वत्सरपर्यन्तं कृत्वा तल्लिङ्गपूजनम् ।
महदैश्वर्यमप्राप्य दुःखितोऽरण्यमाश्रितः ॥ 371

तत्र गत्वा रुरोदोच्चैः क्षुत्पिपासातुरोऽर्भकः ।
तदा तमाह तन्माता तत्र गत्वा विवेकिनी ॥ 372

रे रे बालक मारोदीर्धैर्यमावह पौरुषम् ।
अधैर्येण कृते दुःखेऽप्यर्थसिद्धिर्न सर्वथा ॥ 373

इति तद्वचनं श्रुत्वा बालस्तामाह दुःखितः ।
कृतलिङ्गार्चनस्यापि सौभाग्यं न ममाभवत् ॥ 374

अगस्त्यवचनं श्रुत्वा मया यत्नेन सादरम् ।
शिवपूजा कृता मातः सा नाभूद्भाग्यदायिनी ॥ 375

सौभाग्यमेव न प्राप्तं कृतया शिवपूजया ।
मुक्तिरन्ते कथं प्राप्या सा दुर्लभतरा यतः ॥ 376

अदाहकोऽग्निस्तूलस्य किं महागिरिदाहकः ॥ 377
(तूलं दग्धुमशक्तोऽग्निः किं महागिरिदाहकः)

दारिद्र्यादाह(हि)का पूजा क्व संसारं दहिष्यति
(प्रधक्ष्यति) ॥ 378

दधीचिः (उवाच) -

इत्युक्तवनन्तो(न्तं) मोहेन तं बालं भ्रान्तचेतसम् ।
दृष्ट्वा च तद्वचः श्रुत्वा तमाह जननी तदा ॥ 379

सुदती (माता) उवाच -

रे रे बालक दुर्वृत्त कथमेवं त्वयोच्यते ।
बालकोऽसि यतो भ्रान्तस्तत एवं त्वयोच्यते ॥ 380

अन्ये तु न वदन्त्येव(वं)धीरा विगतकल्मषाः ।
अवश्यं प्राप्यतेऽभीष्टं शिवलिङ्गार्चनात्सुत ॥ 381

अस्मिन्नर्थे श्रुतिर्मानमत्र नास्त्येव संशयः ।
धर्मान्कुर्वन्ति विविधान् श्रुतिप्रामाण्यवादिनः ॥ 382

श्रुतिरेव यतः साक्षात्स्वयं धर्मप्रवर्तिका ।
प्रवर्तयति धर्मेषु श्रुतिर्धर्मपरायणान् ॥ 383

निवर्तयत्यधर्मेभ्यः सैवधर्मपराङ्मुखान् ।
श्रुत्युक्तं कर्म कर्तव्यं श्रुतिप्रमाण्यवादिभिः ॥ 384

श्रुत्युक्तं कर्म कालेन फलं दास्यत्यसंशयम् ।
(श्रुत्युक्तं हि कृतं कर्म कालेनैव फलिष्यति)
श्रुत्युक्तं कर्म शुचिना यदि साङ्गं कृतं भवेत् ॥ 385

तदा सद्यः फलत्येव तत्कर्म श्रुतिचोदितम् ।
व्यङ्गं यदि भवेत्कर्म न तदा फलदायकम् ।। 386

साङ्गमेव कृतं कर्म श्रौतं यस्मात्फलप्रदम् ।
फलं भवत्यवश्यं हि साङ्गेन(ङ्गानां) श्रौतकर्मणा
(कर्मणाम्) ।। 387

अस्मिन्नर्थे न सन्देहस्तत्र मानं श्रुतिर्यतः ।
अतः शिवार्चनं श्रौतं साङ्गं चेत्क्रियते सदा ।। 388

सद्यः समस्तस्वाभीष्टफलदं तद्भविष्यति ।
नियमाः सन्ति बहवः शिवलिङ्गार्चने सुत ।। 389

ते शिशुत्वात्त्वया कर्तुं न शक्यन्ते न संशयः ।
विदित्वा नियमान्सर्वान् विधानं च शिवार्चने ।। 390

शिवार्चनं कुरुष्वाद्य शिवस्तुष्टो भविष्यति ।
व्यङ्गापि शिवपूजा सा कालेन फलदा ध्रुवम् ।। 391

साङ्गा चेच्छिवपूजा सा सद्यः सर्वफलप्रदा ।
साङ्गं यः कुरुते भक्त्या शिवलिङ्गार्चनं सुत ।। 392

स धर्मादिफलाध्यक्षो भवत्येव न संशयः ।
यः पूजयति गौरीशं लिङ्गरूपिणमव्ययम् ।। 393

तमेवातिप्रयत्नेन सौभाग्यमनुधावति ।
यतः शिवार्चनफलं भुक्तिर्मुक्तिश्च शाश्वती ।। 394

सर्वदेवोत्तमः साम्बो भुक्तिमुक्तिफलप्रदः ।
अपारकरुणासिन्धुर्दीनबन्धुस्तमर्चय ॥ 395

कालत्रयेऽपि दुःखानि न शिवार्पितचेतसाम् ।
अतो विधिवदाराध्यमाराधय महेश्वरम् ॥ 396

महेश्वरश्च दुःखानि न नाशयति ते सदा (चेत्तव) ।
कः समर्थोऽपरो देवस्तव दुःखनिवारणे ॥ 397

सर्वेषामपि दुःखानि विनाशयति शङ्करः ।
स किं त्वदीयदुःखानि न नाशयति शङ्करः
(शम्भुर्नोनशयिष्यति) ॥ 398

शङ्करः शंकरो यस्मादतः शं ते प्रयच्छ(दास्य)ति ।
शङ्करं सावधानेन समाराधय सादरम् ॥ 399

विश्वासं कुरु श्रुत्युक्ते(क्ते) शिवलिङ्गार्चने सुत ।
गर्भवासादिदुःखानि यान्यनन्तानि मे सुत ॥ 400

कदापि न भविष्यन्ति श्रीमृत्युञ्जयपूजनात् ।
कुरु विश्वस्य सततं शिवलिङ्गार्चनं मुदा ॥ 401

विश्वस्य भावितभवाः शम्भुं भक्त्याऽर्चयन्ति ये ।
प्राप्नुवन्ति न ते भूयो योनिचक्रं दुरासदं (सुदुर्भगम्) ॥

अयं सुत मदुक्तार्थः श्रुत्युक्तार्थो न संशयः ।
शिवलिङ्गार्चने नित्ये स्वेष्टदे श्रुतिचोदिते ॥ 403

विश्वासो न भवेद्यस्य स महापातकी ध्रुवम् ।
महापातकयुक्तानां पापिनां दुष्टचेतसाम् ॥ 404

न भविष्यति विश्वासः कृतकर्मानुसारतः ।
यस्य ग्रहा भविष्यन्ति प्रतिकूला दुराग्रहाः ॥ 405

तस्य नश्यति विश्वासः शिवलिङ्गार्चने ध्रुवम् ।
शिवलिङ्गार्चने यस्य विश्वासः श्रुतिचोदिते ॥ 406

स सर्वशो भुक्ति(क्त)भोगः प्रयाति शिवसन्निधिम् ।
अनुकूला ग्रहा यस्यानुग्रहाद् गिरिजापतेः ॥ 407

तस्यैव शिवपूजायां विश्वासो भवति ध्रुवम् ।
दुर्मेधयाऽश्रद्धया च मृत्तिकालिङ्गपूजने ॥ 408

न भविष्यति विश्वासः सुतरां सत्यमुच्यते ॥ 409

दधीचिः (उवाच) -

इति तद्वचनं श्रुत्वा ज्ञात्वा च नियमान्मुनेः ।
विधिवत्पूजयामास शिवं मृल्लिङ्गरूपिणम् ॥ 410

बिल्वपत्रैः प्रसूनैश्च तरुगुल्मलतोद्भवैः ।
कुशकाशद्रोणपुष्पैः पूजयामास शङ्करम् ॥ 411

दूर्वाबृहत्यर्कशमीफल्ल(पत्रैः) नीलोत्पलैरपि ।
करवीरैरपामार्गैः पूजयामास शङ्करम् ॥ 412

ततः प्रसन्नो गौरीशो नानागणनिषेवितः ।
प्रसन्नं पूजयामास स बालः पार्वतीपतिम् ॥ 413

ततस्तुष्टाव रुद्रेण पञ्चरुद्रेण चेश्वरम् ।
त्वरितेनापि रुद्रेण रुद्रसूक्तैश्च शङ्करम् ॥ 414

स्तोत्रैश्च विविधैः स्तुत्वा प्रसीदेति वदन्मुहुः ।
प्रणतः शिवपादाब्जे ब्रह्मविष्णवादिपूजिते ॥ 415

ततः कृताञ्जलिपुटैः(टः) पुष्पैरभ्यर्च्य शङ्करम् ।
ययाचे महदैश्वर्यं मुक्तिं च प्रणतः पुनः ॥ 416

तद्याचितं ददौ शम्भुर्वरद्वयमपि प्रभुः ।
ददावाकल्पमायुष्यमारोग्यं च महेश्वरः ॥ 417

यतः साम्बो महादेवो वाञ्छितार्थफलप्रदः ।
ततस्तद्याचितं दत्त्वा ददावन्यदपि प्रभुः ॥ 418

ततस्तत्रैव सगणो महेशोऽन्तर्दधे नृप ।
स बालकोऽपि सन्तुष्टो बभूवातीव विस्मितः ॥ 419

स जगाम [प्रोवाच](उवाच) ततो मात्रे प्रसादं श्रीमहेशितुः ।
सापि तद्वचनं श्रुत्वा हृष्टा जाता नराधिप ॥ 420

ततः परं च संहृष्टः स मृल्लिङ्गं शिवात्मकम् ।
पूजयामास पुष्पाद्यैः श्रद्धाभक्तिपुरःसरम् ॥ 421

तदानीमागतस्तत्र जितारिरिति भूपतिः ।
स तं शिवार्चकं बालं ददर्शोत्तमवर्चसम् ॥ 422

भस्मोद्धूलितसर्वाङ्गं त्रिपुण्ड्राङ्कितमस्तकम् ।
रुद्राक्षमालाभरणं तं दृष्ट्वा विस्मितोऽभवत् ॥ 423

ततस्तं शिवचिह्नाङ्कबालकं शिवपूजकम् ।
दृष्ट्वा स नृपतिर्भक्त्या पूजयामास भूपते ॥ 424

ततस्तस्मै ददौ राजा राज्यं सिंहासनं विना ।
ततो राजा ययौ भूप वैरिदेशजिगीषया ॥ 425

ततः स राजा जित्वारीन् जित्वा तद्राज्यमञ्जसा ।
पालयामास सततं स्वकं देशमनाकुलः ॥ 426

बालोऽपि महदैश्वर्यं सम्प्राप्य मुदितः सदा ।
सदाशिवं प्रयत्नेन पूजयामास सादरम् ॥ 427

स बालकः श्रद्धयैव सहस्रघटपूरितैः ।
पञ्चामृतैर्लिङ्गरूपमभिषिञ्चन्महेश्वरम् ॥ 428

बिल्वपत्रैरतिस्वच्छैः प्रसूनैर्विविधैरपि ।
स शिवं पूजयामास भक्तिश्रद्धासमन्वितः ॥ 429

शाङ्करान् भोजयामास स क्षीरान्नेन भूरिशः ।
शाङ्करेभ्यो ददौ भक्त्या रत्नान्यत्युत्तमानि च ।। 430

स बालः कारयामास शिवालयमनुत्तमम् ।
तत्र लिङ्गप्रतिष्ठां च स चकार विधानतः ।। 431

उत्सवान्कारयामास स नित्यं शङ्करालये ।
चकार रत्नैर्विविधैः श्रीमहादेवपूजनम् ।। 432

नित्यं पार्थिवलिङ्गानां सहस्रं पूजयन् स्थितः ।
पुत्रपौत्रादिवृद्धिश्च समभूत्तस्य भूपते ।। 433

स एव कल्पपर्यन्तं शिवं सम्पूज्य सादरम् ।
नित्यं शिवकथाः शृण्वन् सन्तोषेण स्थितो नृप ।। 434

ततः स शिवमभ्यर्च्य शिवस्मरणपूर्वकम् ।
वदन् शिवशिवेशेति जहौ प्राणान्नराधिप ।। 435

ततो महेशकृपया सम्प्राप्य शिवसन्निधिम् ।
स बभूव शिवे लीनः स्वकृतैः पुण्यकर्मभिः।। 436

एवमेव पुरा राजन् बहवः शाङ्कराः शिवम् ।
सम्पूज्यापुर्महादेवं भुक्तैश्वर्या यथेच्छया (यथोचितम्) ।।

शिवपूजाप्रभावेण निरातङ्का निरामयाः ।
प्रयान्त्येव शिवं साम्बं भुक्त्वा भोगान् शिवार्चकाः ।। 438

शिवसंसक्तचित्तानां शिवव्रतरतात्मनाम् ।
इहामुत्रापि भूपाल न दुःखं सत्यमुच्यते ॥ 439

राजन् शिवव्रते श्रद्धा दुर्लभा देहधारिणाम् ।
सा भवेद्यदि भाग्येन तदा मुक्तिरदूरतः ॥ 440

शिवार्चने रुद्रजपे भस्मरुद्राक्षधारणे ।
यस्य श्रद्धा भवेन्नित्यं स निर्वाणाङ्गनापतिः ॥ 441

शिवलिङ्गं बिल्वपत्रं रुद्राक्षाः श्रौतभस्म च ।
शैवत्वं चेति-पञ्चैते यत्र तत्र न पापभीः ॥ 442

साक्षान्मुक्तिप्रदं धन्यं शिवलिङ्गादिपञ्चकम् ।
दृष्ट्वैव विलयं यान्ति पातकानि सहस्रशः ॥ 443

सम्पादनीयं यत्नेन शिवलिङ्गादिपञ्चकम् ।
अयमेव परो धर्मो द्विजानां नृपसत्तम ॥ 444

द्विजस्तन्न त्यजेन्मोहाच्छिवलिङ्गादिपञ्चकम् ।
निधानरूपं सम्प्राप्य शिवलिङ्गादिपञ्चकम् ॥ 445

यस्त्यजेन्मोहविवशः स पापी नरकं व्रजेत् ।
पञ्चवक्त्रप्रियतमं शिवलिङ्गादिपञ्चकम् ॥ 446

यत्र दृष्टं ततो यान्ति दूरतो यमकिङ्कराः ।
महादेवप्रियतरं शिवलिङ्गादिपञ्चकम् ॥ 447

यस्मिन् पश्यन्ति त्रिदशास्तं नमन्त्यर्चयन्ति च ।
यस्मिन्भवति भाग्येन शिवलिङ्गादिपञ्चकम् ।। 448

स भुक्तस्वेष्टविभवः प्रयाति शिवरूपताम् ।
एकैकमस्ति यत्तत्र शिवलिङ्गादिपञ्चके ।। 449

तन्मात्रमपि भूपाल हेतुः स्वर्गापवर्गयोः ।
शैवधर्ममनाश्रित्य यो मुक्तिमभिवाञ्छति ।। 450

तस्य दूरतरा मुक्तिः स्वप्नेऽपि नृपसत्तम ।
शैवधर्मविनिर्मुक्ताः( विहीनास्तु) कालपाशनियन्त्रिताः ।।

प्रयान्ति कालसदनं सकुलं स्वकुलान्विताः ।
शिवधर्मैकनिष्ठानां शिवपूजारतात्मनाम् ।। 452

ये कुर्वन्त्यानुकूल्यं ते मुच्यन्ते पापसञ्चयात् ।
शैवधर्मरतान्दृष्ट्वा योऽभिनन्दति सादरम् ।। 453

स भक्तो देवदेवस्य महेशस्येति मन्महे ।
यस्मिन्देशे भविष्यन्ति शैवधर्मपरायणाः ।। 454

स देशः पावनो धन्यो धन्यस्तद्देशपालकः ।
भवानप्यतिधन्योऽस्ति शैवधर्माभिरक्षकः ।। 455

त्वदधीनौ यतो भूप धर्माधर्मौ विनिश्चितौ ।
अशैवश्चेद्भवेद्राजा तदा तदनुगास्तथा ।। 456

ते यान्ति नरकं घोरं तेन भूपतिना सह ।
अतो भवान्प्रयत्नेन शैवधर्मरतो भव(?) ॥ 457

शैवान्पालय भूपाल धर्मोऽयं तव मुक्तिदः ।
आस्थां माकुरु भूपाल देहेऽस्मिन्नध्रुवे ध्रुवम् ॥ 458

स्वयं यजस्व भूतेशं याजयान्यांश्च भक्तितः ।
गर्भवासादिदुःखानि स्मृत्वा स्मृत्वा पुनः पुनः ॥ 459

तद्दुःखनाशकं नित्यं शङ्करं शरणं व्रज ।
विना महेश्वरादन्यः संसारभयनाशकः ॥ 460

नास्त्यतोऽत्यन्तयत्नेन पूजय त्रिपुरान्तकम् ।
आस्थां मा कुरु विष्णुत्वे ब्रह्मत्वे वा नराधिप ॥ 461

किन्तु वाञ्छय यत्नेन शिवसायुज्यमास्तिक ।
(शिवसायुज्यलाभाय सदा यत्नपरो भव)
अनादिभूते संसारे किं न प्राप्तं त्वया नृप ॥ 462

सर्वं शिवपदादन्यन्नश्वरं भावय स्वयम् ।
प्रसन्ने श्रीमहादेवे पशुपाशविमोचके ॥ 463

मुक्ता भवन्ति सर्वेऽपि पशुपाशनियन्त्रणात् ।
शिवः संसारपाशेन वद्ध्वा सर्वान्पशूनपि ॥ 464

कदाचित्कृपया शम्भुः मोचयत्यपि तान्पुनः ।
एतादृशं पशुपतिं नित्यमानन्दरूपिणम् ॥ 465

शरणं याहि भूपाल शरण्यं सुकृतात्मनाम् ।
भवन्ति पशवो नित्यं (जीवा)यमज्ञात्वा महेश्वरम् ।।

तमाराधय भूपाल विधिवद्विधिबोधितम् ।
हृदि ध्यात्वा महादेवं सकृदप्यमलाशयाः ।। 467

गर्भवासं च निरयावासं नो प्राप्नुवन्ति ते ।
गर्भवासादिकं दुःखं तावदेव नराधिप ।। 468

यावन्न मनसा ध्यातः पार्वतीप्राणवल्लभः ।
पार्वतीनाथ विश्वेश महेशेति जपन्ति ये ।। 469

तान्द्रुतं मोचयत्येव शिवः संसारपाशतः ।
संसारं दुस्तरं ज्ञात्वा ज्ञात्वा जन्म च दुःखदम् ।। 470

भजन्ति श्रीमहादेवं मुनयो वीतकल्मषाः ।
भज शङ्करमाराध्यं यज शङ्करमन्वहम् ।। 471

जप नामानि शैवानि भस्मोद्धूलनपूर्वकम् ।
अयमेवोपदेशस्ते कर्तव्योऽस्माभिरादरात् ।। 472

यतः शठो भवान्राजन्मोक्षार्थी शिवतत्परः ।
अशाङ्करायोपदेशो नेदृशः क्रियते नृप ।। 473

ततो धर्मोपदेशार्हस्तादृशो न हि वस्तुतः ।
सुक्षेत्रोप्तं यथा बीजं फलति स्वानुरूपतः ।। 474

तथा धर्मोपदेशोऽपि शैवे फलति नान्यतः ।
यथोप्तमूषरे क्षेत्रे बीजं न फलदायकम् ॥ 475

तथा धर्मोपदेशोऽयं शैवान्ये न फलप्रदः ।
अशैवान्सावधानेन शिक्षय त्वं नराधिप ॥ 476

शैवानप्यतियत्नेन पालय त्वं स्वशक्तितः ।
अस्मिन्मध्यार्जुनक्षेत्रे कृतं धर्मानुपालनम् ॥ 477

कृता मध्यार्जुनेशस्य पूजापि प्रतिवासरम् ।
अस्मिन्मध्यार्जुने वासो देवानामपि दुर्लभः ॥ 478

क्षेत्रमेतन्नृपश्रेष्ठ शिवलिङ्गात्मकं यतः ।
उषित्वैकं दिनं वात्र दृष्ट्वा मध्यार्जुनेश्वरम् ॥ 479

सम्पूज्य च यथाशक्ति प्रयान्त्येव शिवं जनाः ।
पुरा वासः कृतो भूप शिवस्थानेषु भूरिशः ॥ 480

तद्वासफलतो वासस्त्वया प्राप्तोऽत्र भूपते ।
नीतान्यनेकजन्मानि त्वयात्युग्रतपांसि च ॥ 481

कृतानि काशीप्राप्त्यर्थं शिवपूजापुरःसरम् ।
अतःपरं भुक्तभोगः कशीं व्रज विधानतः ॥ 482

मयापि गम्यते काशी श्वः परश्वोऽथवा नृप ।

सदाशिवः (उवाच) -

इति पीयूषसदृशं दधीचिवचनं शिवे ॥ 483

श्रुत्वा स धर्ममूर्तिस्तं प्रणम्याह कृताञ्जलिः ॥ 484

धर्ममूर्तिः उवाच -

कृतार्थोऽस्मि मुनिश्रेष्ठ कृपा मयि कृता त्वया ।
यतः सर्वार्थदा पुण्या श्राविता शाङ्करी कथा ॥ 485

मुने भवादृशाः शैवा यतो दीनदयालवः ।
श्राविता कथमेवाद्य कथा पापौघहारिणी ॥ 486

भवतां दर्शनेनैव नष्टं पापकुलं मम ।
श्रुता शिवकथाप्येषा मह्यं मोक्षं प्रयच्छति ॥ 487

कदा वा गम्यते काशी कृपया ज्ञापयन्तु माम् ।
सत्सङ्गतिमवाप्याहं वसाम्यत्र न संशयः ॥ 488

सदाशिवः (उवाच) -

इत्युक्त्वा स नृपो भूयः शाम्भवान् मुनिसत्तमान् ।
पूजयामास यत्नेन भक्तिश्रद्धापुरःसरम् ॥ 489

दधीचिप्रमुखाः सर्वे तेन भूपेन पूजिताः ।
ययुः स्वस्वाश्रमं देवि स्मरन्तो मामजं विभुम् ॥ 490

दधीच्याद्याः कियत्कालं निद्रां कृत्वा ततः परम् ।
काशीं गन्तुं समुद्युक्ताः प्रातः स्नात्वा यथाविधि ॥ 490

ततः श्राद्धादिकं कृत्वा यथाशास्त्रं यथाक्रमम् ।
प्रतस्थिरे ततः काशीं सम्प्राप शिवरूपिणीम् ॥ 491

काशीं सम्प्राप्य ते सर्वे प्रापुरानन्दमक्षयम् ।
ज्ञानवाप्यां ततः सर्वे स्नानं चक्रुर्यथाविधि ॥ 492

ज्ञानेशादींस्ततोऽभ्यर्च्य विश्वेश्वरमुमापतिम् ।
जलबिल्वप्रसूनाद्यैः पूजयामासुरम्बिके ॥ 493

पूजयन्तः स्थिता मां ते बहुकालं वरानने ।
सर्वे मुक्तास्ततो देवि मत्प्रसादादकल्मषाः ॥ 494

इदं लिङ्गमुपाश्रित्य को याति मरणं विना ।
मृत्युं वाञ्छति धन्योऽत्र शैवं गुरुमिव प्रियम् ॥ 495

यो याति काशीं सम्प्राप्याप्यधमः पापकृच्छिवे ।
तस्य मुक्तिः कथं भूयात् महाकल्पशतैरपि ॥ 496

मध्यार्जुनेशं सम्प्राप्य ये स्थिता भक्तिपूर्वकम् ।
ते काश्यां मर्तुमिच्छन्ति शिवस्मरणपूर्वकम् ॥ 497

मध्यार्जुनेशं मदनुग्रहेण
मायाविमुक्ता मयि सक्तचित्ताः ।

सम्प्राप्य संसारदवाग्निशान्त्यै
सम्पूज्य तिष्ठन्ति शिवे शुभानने ॥ 498

॥ इति श्रीशिवरहस्ये सप्तमांशे
शिवगौरीसंवादे मध्यार्जुनक्षेत्रमहिमानुवर्णनं (?)
नामाष्टाविंशोऽध्यायः ॥



## ॥ एकोनत्रिंशोऽध्यायः ॥

शिवः उवाच -

शिवे मध्यार्जुनादीनि सन्ति तीर्थानि कोटिशः ।
तेषां प्रभावः केनापि न ज्ञातुं शक्यते ध्रुवम् ॥ 1

पृथिव्यां सन्ति तीर्थानि कोटिशः कमलानने ।
तानि सर्वाणि तीर्थानि काशीप्राप्तिकराणि च ॥ 2

श्रीकाशीक्षेत्रभिन्नानि सन्ति तीर्थानि कोटिशः ।
तेषु तप्ते हि तपसि काशी सम्प्राप्यते शिवे ॥ 3

येन जन्मस्वनन्तेषु कृता धर्माः सहस्रधा ।
तेनैव लभ्यते काशी मद्रूपा मुक्तिदायिनी ॥ 4

न काश्या अधिकं क्षेत्रं न कुत्रापि वरानने ।
सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ॥ 5

यदेतद्विमलं लिङ्गं दृश्यतेऽद्य मदात्मकम् ।
एतल्लिङ्गसमं लिङ्गं न कुत्रापि वरानने ॥ 6

इदमेव परं ज्योतिरिदमेव परात्परम् ।
इदमेव मदाकारमनन्तमिदमेव हि ॥ 7

अनन्तवेदवेदान्तसारः सर्वो वरानने ।
पिण्डीभूयात्र सततं लिङ्गाकारेण तिष्ठति ॥ 8

निर्विकारं परं ब्रह्मलिङ्गमेतन्मनोरमे ।
निष्कलं निर्मलं शान्तमिदमेव न संशयः ॥ 9

शैवमेतन्महस्साक्षादक्षयं लिङ्गमुत्तमम् ।
इदं लिङ्गमनाद्यन्तं सच्चिदानन्दलक्षणम् ॥ 10

सर्वपुण्यफलाकारमविकारं निरञ्जनम् ।
लिङ्गमेतन्ममोङ्कारं मुक्तिप्रदमनुत्तमम् ॥ 11

गिरिजे पश्य पश्येदं लिङ्गं मङ्गलदायकम् ।
कथमेतत्प्रभाकूटो दिशि विश्राम्य गच्छति ॥ 12

वेदाः स्तुवन्ति बहुधा लिङ्गस्यास्य मदाकृतेः ।
माहात्म्यं मोक्षदं पुण्यं स्वस्वशक्त्या वरानने ॥ 13

कृतधर्माः पूतचित्ता ये तपोमूर्तयो जनाः ।
तेषामेवास्य लिङ्गस्य दर्शनं भवति प्रिये ॥ 14

यदाकदाचिद्येनेदं लिङ्गं दृष्टं मम प्रिये ।
तेन गर्भाशयावासदुःखं नो प्राप्यते ध्रुवम् ॥ 15

अस्मिल्लिङ्गे मुदा येन दत्तं बिल्वदलादिकम् ।
तेन दत्तानि रत्नानि कोटिशो नात्र संशयः ॥ 16

अस्मिन् लिङ्गे मुदा दत्तं येनाऽऽकल्पं मम प्रियम् ।
ससागरनदीतोये दत्तं तेनाखिलं प्रिये ॥ 17

येनात्र फलमन्यद्वा दत्तं लिङ्गे मदात्मके ।
तेन मेरुसमान्नानि दत्तान्येव न संशयः ॥ 18

एकोऽपि दत्तो येनात्र दीपस्तेन तु कोटिशः ।
नित्यमत्युज्ज्वला दीपा दत्तास्तेन न संशयः ॥ 19

एका वापि कृता येन लिङ्गस्यास्य प्रदक्षिणा ।
प्रदक्षिणीकृता तेन क्षोणी सर्वा न संशयः ॥ 20

प्रणामोऽस्य कृतो येन लिङ्गस्यैकोऽपि भक्तितः ।
तेनानन्ताः कृता भक्त्या प्रणामा नात्र संशयः ॥ 21

लिङ्गमेतत्क्षणार्धं वा येन ध्यातं मदात्मकम् ।
तेन ध्यातोऽस्म्यहं साक्षाद्बहुकालं वरानने ॥ 22

तिलैस्त्रैयम्बकेनाग्नौ येनैकाप्याहुतिर्हुता ।
कोटिहोमाः कृतास्तेन श्रौताग्नौ विधिपूर्वकम् ।। 23

येनैकवारं जप्तोऽत्र शैवः पञ्चाक्षरो मनुः ।
तेन तप्तं तपो घोरं कल्पकोट्ययुतं शिवे ।। 24

येनैकवारमात्रं वा पठितं रुद्रसूक्तकम् ।
वेदपारायणं तेन कल्पकोट्ययुतं कृतम् ।। 25

(तेन वेदत्रयीपाठः कृतः कल्पावधि प्रिये ।)
येन काश्यां स्थितं भक्त्या क्षणार्धमपि शोभने ।। 26

पञ्चाग्निमध्ये तेनैव स्थितमब्दसहस्रकम् ।
येनेदं पूजितं लिङ्गं जलपुष्पफलादिभिः ।। 27

तेनाहं पूजितः साक्षात् नित्यमब्दसहस्रकम् ।
दृष्टं येनेदममलं लिङ्गं विश्वेश्वराभिधम् ।। 28

तेन साक्षादहं दृष्टः परमानन्दलक्षणः ।
येनेदं प्रणतं लिङ्गं मम विश्वेश्वराभिधम् ।। 29

तेन साक्षादहं भक्त्या प्रणतः सुरवन्दितः ।
ज्ञानवाप्यां निमज्ज्यात्र यो मां लिङ्गस्वरूपिणम् ।। 30

यः स्मरेत् स हि मामेति स्ववंश्यैरखिलैः सह ।
येन स्तुतमिदं लिङ्गं मम विश्वेश्वराभिधम् ।। 31

तेन साक्षादहं देवि स्तुत एव न संशयः ।
येन स्पृष्टमिदं लिङ्गं मम विश्वेश्वराभिधम् ॥ 32

तेन साक्षादहं देवि स्पृष्ट एव न संशयः ।
पूजितोऽहं महादेवो दृष्टः स्पृष्टः स्तुतो नतः ॥ 33

दास्याम्यैश्वर्यमतुलं भक्तिं च परमां शिवे ।
उपसर्गसहस्राणि सोढ्वा काश्यां वसन्ति ये ॥ 34

तानन्तकाले संसारात्तारयिष्यामि शङ्करि ।
धैर्यं विज्ञातुमेवेह पुरा काशीनिवासिनाम् ॥ 35

उपसर्गाः पुरा सृष्टा मयानन्ताः क्षणे क्षणे ।
तदा मुनीनां सर्वेषां शिवे काशीनिवासिनाम् ॥ 36

उद्वेगा बहवो जाता बहुधैव क्षणे क्षणे ।
छायार्थं वृक्षमूलानि येऽध्यतिष्ठंस्तपस्विनः ॥ 37

वृक्षास्ते पर्णसम्पूर्णाः सर्वे शुष्कीकृता मया ।
पर्णशालासु ये नित्यं न्यवसन् शान्तमानसाः ॥ 38

ताः कृता भस्मसात्सद्यः वृष्ट्यातपहरा मया ।
ततः सृष्टा जरा क्रूरा व्याधयोऽन्येऽपि दुःखदाः ॥ 39

तद्रोगपीडिताः सर्वे दुःखं प्रापुर्मुनीश्वराः ।
केचिद्विषज्वराक्रान्ताः केचिच्छीतज्वरान्विताः ॥ 40

केचिद्रोगान्तराक्रान्ताः जाताः सर्वेऽपि चैकदा ।
दुःस्वप्ना दर्शितास्तेभ्यः कोटिशो भयदायकाः ॥ 41

अद्भुतान्यपि चिह्नानि दर्शितानि मया शिवे ।
तदा नियमिनां श्रेष्ठं जैगीषव्यं महामुनिम् ॥ 42

सम्प्रापुर्मुनयो दिग्भ्यो महाव्याधिसमाकुलाः ।
अथ तं मुनिमभ्येत्य मुनयो रोगपीडिताः ॥
प्रणम्योचुः शुष्ककण्ठा ज्वरदाहादिपीडिताः ॥ 43

ऋषय ऊचुः -

नानाव्याधिकृतं दुःखं सर्वैरप्यनुभूयते ।
सर्वथास्मासु कस्यापि स्वास्थ्यं नास्ति महामुने ॥ 44

इयत्ता नास्ति दुःखानां रुग्णानां नो महामुने ।
दग्धाः पर्णगृहाः सर्वे शाताः शुष्काश्च भूरुहाः ॥ 45

फलान्यन्यानि दुग्धानि वल्कलानि च भूरिशः ।
जलं न लभ्यते क्वापि पानार्थमपि नः प्रभो ॥ 46

किमुतान्नफलादीनि तद्रूपमपि नेक्षितम् ।
पञ्चक्रोशात्मके क्षेत्रे बहुवोऽमी ह्युपद्रवाः ॥ 47

पञ्चक्रोशाद्बहिः सर्वे तिष्ठन्ति सुखिनो जनाः ।
अतोऽतः परमस्माभिः काश्यां स्थातुं न शक्यते ॥ 48

शीघ्रं निर्गत्य गन्तव्यं इदानीमेव सर्वथा ।
तीर्थानि सन्ति भूपृष्ठे नर्मदादीनि भूरिशः ।। 49

तेषु स्थातव्यमनिशं शिवक्षेत्राणि तान्यपि ।
जीवनं चेद्भवेदग्रे धर्मसिद्धिर्भविष्यति ।। 50

गते तु जीवने धर्मःकथं साध्यो भविष्यति ।
इति तेषां वचःश्रुत्वा मुनीनामार्तचेतसाम् ।। 51

जैगीषव्यो दुःखितोऽपि प्राह तान् धैर्यमुद्वहन् ।। 52

**जैगीषव्यः उवाच -**

प्राप्यन्त एव दुःखानि सर्वैर्नास्त्यत्र संशयः ।
उपसर्गाःसमुत्पन्ना दैवयोगेन भूरिशः ।। 53

उपसर्गा भविष्यन्ति काश्यां ये ये यदा यदा ।
ते ते सर्वेऽपि सोढव्या सर्वदापि तदा तदा ।। 54

उपसंगर्गिस्तृणीकृत्य यः काश्यां स्थातुमिच्छयति ।
तस्मै मुक्तिमयत्नेन काशीनाथः प्रयच्छति ।। 55

द्विवारं नैव मर्तव्यं किन्तु मर्तव्यमेकदा ।
तदद्य वायुरन्ते वा मरणं नो भविष्यति ।। 56

त्याज्यैव यत्र कुत्रापि प्राप्तेयं तनुरेकदा ।
त्याज्या सा तनुरत्रैव त्याज्या यत्नपुरःसरम् ।। 57

प्राणेषूत्क्रममाणेषु जन्तोरत्र महेश्वरः ।
मोक्षार्थं तारकं मन्त्रं प्रीत्योपदिशति स्वयम् ॥ 58

महेशाङ्कं समारुह्य महेशेनैव चोदितः ।
प्राप्तव्यस्तारको मन्त्रः शिवपञ्चाक्षराभिधः ॥ 59

गृहीतास्तनवोऽस्माभिर्मुधाऽनन्ताः पुरा किल ।
त्यक्ताश्च ताः कीकटादौ नानानरकसाधनाः ॥ 60

यावद्भुक्तं पुरा दुःखं नरकेषु सहस्रधा ।
तावद्दुःखमिदानीं किं भवद्भिर्भुज्यते द्विजाः ॥ 61

यावद्दुःखं गर्भवासे भवद्भिर्भुक्तमेकदा ।
तावद्दुःखमिदानीं किं भवद्भिर्भुज्यते द्विजाः ॥ 62

सूकरश्वाजमहिषनानाकुत्सितयोनिषु ।
बहुधोत्पत्तिरभवत् बहुदुःखप्रदायिनी ॥ 63

तानि दुःखानि सर्वाणि स्मर्तव्यानि पुनः पुनः ।
बहुधैवानुभूतानि विस्मृतानि न तानि तु ॥ 64

किञ्चानन्ततपोदानधर्मैश्च विधिवत्कृतैः ।
प्राप्तेयं पुण्यनिलया कथं त्याज्या मनीषिभिः ॥ 65

काशी प्राप्ता धर्मसङ्घैरनन्तैः कालसाधितैः ।
सर्वपुण्यमयी धन्या काशी त्याज्या कथं भवेत् ॥ 66

काशीप्राप्त्यर्थमस्माभिर्बहुधैव कृतं तपः ।
ततः पुण्यफलावाप्ता काशी त्याज्या न सर्वथा ।। 67

अनायासेन सम्प्राप्ता परं त्वयासकोटिभिः ।
प्राप्तेयं मुक्तिदा काशी त्यज्या स्याज्जीवता कथम् ।।

नवापि निधयस्त्याज्याः पुत्राद्याश्च मुनीश्वराः ।
इयं काशी कथं त्याज्या सर्वमुक्तिप्रदायिनी ।। 69

त्यागार्थमेव किं प्राप्ता काशीयं पापनाशिनी ।
त्याज्यैव चेदेतदर्थं तपस्तप्तं पुरा कथम् ।। 70

तीर्थान्तरेषु गन्तव्यं तत्र स्थातव्यमित्यपि ।
भवद्भिर्मुक्तमोहैश्च न वक्तव्यं तथा द्विजाः ।। 71

निधानकलशं त्यक्त्वा को वाऽन्विच्छेद्वराटिकाम् ।
एवं काशीमिमां त्यक्त्वा को वा तीर्थान्तरं व्रजेत् ।। 72

यस्तीर्थान्तरमुद्दिश्य काशीं त्यक्त्वा गमिष्यति ।
स महापातकाक्रान्तो भविष्यति पदे पदे ।। 73

काश्यां स्थित्वा जिगमिषां कुर्वन्तीर्थान्तरं नरः ।
नानापातकसङ्क्रान्तो भवत्येव न संशयः ।। 74

काशीं त्यक्त्वान्यतीर्थानि गन्तुमिच्छन्ति ये यदा ।
तदा तेभ्यः परावृत्ता मुक्तिकान्तापि मुक्तिदा ।। 75

ये काशीं त्यक्तुमिच्छन्ति निर्वाणपददायिनीम् ।
ते सर्वेऽप्यात्महन्तारस्तेषां नास्त्येव निष्कृतिः ॥ 76

शरीरेष्वीदृशीमास्थां के वा कुर्वन्ति दुर्धियः ।
काशीं त्यक्त्वा शरीराणि रक्षणीयानि किं बुधैः ॥ 77

शरीरं वस्तुतस्तुच्छं मूत्रामेध्यसमावृतम् ।
तस्मिन्नास्था कथं विप्रा भवद्भिः क्रियतेऽधुना ॥ 78

काशी त्याज्येति सहसा जीवद्भिः कथमुच्यते ।
मुक्तिवार्ता दूरतोऽस्तु कथं लज्जा न जायते ॥ 79

मांसमूत्रपुरीषाढ्यशरीरारक्षणे मतिः ।
काशीत्यागमतिश्चेति द्वयं दौर्भाग्यलक्षणम् ॥ 80

समहापातकाक्रान्तो भविष्यति पदे पदे ।
सन्त्यनन्तानि पापानि काशीसीम्नि द्विजोत्तमाः ॥ 81

काशीत्यागे लगिष्यन्ति तानि युष्मासु सर्वथा ।
लग्नानि तानि पापानि न नश्यन्ति कदाचन ॥ 82

अनन्तपापसङ्घानां फलं काशीवियोजनम् ।
अनन्तपुण्यसङ्घानां फलं काशीनिषेवणम् ॥ 83

काशीप्राप्त्यर्थमस्माभिः कथं पुण्यार्जनं कृतम् ।
काशीप्रापकपुण्याय यत्नाश्च बहुधा कृताः ॥ 84

विना यत्नैरियं काशी लब्धाऽस्माभिः किमीदृशैः ।
कथं त्याज्या शरीरार्थं धिक्शरीरमिदं द्विजाः ।। 85

काशींशरीरक्षार्थं त्यक्ष्यामोऽद्यैनसा यदि ।
तदेनांसि हसिष्यन्ति करताडनपूर्वकम् ।। 86

शरीरपीडा बहुधा यदि सोढुं न शक्यते ।
तदा शस्त्रैस्तनुं छित्वा काश्यां मर्तव्यमुत्तमैः ।। 87

उपोषणैर्वा मर्तव्यं काश्यां दुःखासहिष्णुभिः ।
परन्तु काशी न त्याज्या मनसापि मुमुक्षुभिः ।। 88

धन्याः कीटादयोऽप्येते विप्रा भक्तदपेक्षया ।
न काशीं त्यक्तुमिच्छन्ति कदाचिदपि चेतसा ।। 89

शताब्दावधि पानीयं काश्यां क्वापि न दृश्यते ।
तथाप्येते न त्यजन्ति काशीं कीटादयो द्विजाः ।। 90

जलं प्रधानमेतेषां कीटानां जीवनं द्विजाः ।
तथापि तद्विहायैते(तदनाहत्य)काश्यां तिष्ठन्ति धैर्यतः ।।

जीवनं धन्यमेतेषां काशीसंसक्तचेतसाम् ।
काशीं न त्यक्तुमिच्छन्ति त्यक्तजीवनसाधनाः ।। 92

एतं पश्यन्तु मण्डूकं चर्ममात्रावशेषितम् ।
काश्यां विना जलेनायं कथं तिष्ठति धैर्यतः ।। 93

क्षणार्धमपि मण्डूको न तिष्ठति जलं विना ।
काश्यामेतादृशस्यास्य वासः कथमभूद्द्विजाः ॥ 94

मण्डूकापेक्षयाप्येते भवन्तस्त्वधमाधमाः ।
यतः काशीं विहायाद्य यूयं यातुमिहेच्छथ ॥ 95

धिग्विद्यां भवतां मूर्खाः किं तया विद्ययाऽधुना ।
यतः कशीवियोगार्थमुद्यता यूयमीदृशाः ॥ 96

प्रायो भवन्तः सर्वेऽपि शिश्नोदरपरायणाः ।
अन्यथा भवतां काशीत्यागे बुद्धिः कथं भवेत् ॥ 97

भक्ष्यभोज्यादिकं काश्यां समृद्धं यावदाप्यते ।
तावद्भवद्भिः कर्तव्यः काशीवासोऽन्नकाङ्क्षिभि ॥ 98

स्थितं भवद्भिर्मन्येऽहं पापैरन्नादिकाङ्क्षया ।
एतादृशानां भवतां धिग्धिग्धिग्जीवनं वृथा ॥ 99

भवादृशानां दुष्टानां काशीं सन्त्यक्तुमिच्छताम् ।
नरकेष्वनिशं वासो भविष्यति न संशयः ॥ 100

काशीत्यागरतं मोहाद्ये पश्यन्ति नराधमम् ।
तेषामपि भवेत्पापं किं पुनस्तादृशात्मनाम् ॥ 101

काशी त्याज्येति बुद्धिश्चेत्तदा मन्निकटेऽधुना ।
किमर्थमागतं यान्तु श्यामं कृत्वा मुखं जडाः (द्विजाः) ॥

काशीत्यागरतैः साकं मोहाद्वा योऽनुभाषते ।
न तस्य निष्कृतिर्दृष्टा चान्द्रायणशतैरपि ॥ 103

अस्मिन् धर्मयुगे जाता काशीत्यागरतिः कथम् ।
अधर्मः प्रायशोऽद्यैव सम्प्राप्तः कलिकालिकः ॥ 104

कलिकाले भविष्यन्ति काशीत्यागरता जनाः ।
ततस्तेषां भविष्यन्ति यातना अपि दुःसहाः ॥ 105

अन्यतीर्थसमां ये तु कलौ ज्ञास्यन्ति काशिकाम् ।
ततस्तेषां भविष्यन्ति यातना अपि दुःसहाः ॥ 106

शिवान्यमर्चयिष्यन्ति कलौ त्यक्त्वा शिवार्चनम् ।
ततस्तेषां भविष्यन्ति .... .... ॥ 107

शिवान्यं कीर्तयिष्यन्ति कलौ त्यक्त्वा शिवस्तुतिम् ।
ततस्तेषां भविष्यन्ति .... .... ॥ 108

शिवान्यं(सं) स्मरिष्यन्ति कलौ त्यक्त्वा शिवस्तु(स्मृ)तिम् ।
ततस्तेषां भविष्यन्ति .... .... ॥ 109

एतादृशानि कर्माणि पापहेतूनि भूरिशः ।
द्विजा अपि करिष्यन्ति सम्प्राप्ते तु कलौ युगे ॥ 110

अधुना कथमेतानि कर्माणि दुरदृष्टय(तः) ।
कर्तुमिच्छथ पापिष्ठा देहरक्षणतत्पराः ॥ 111

काशीं गत्वा सदा काश्यां वसामीत्यपि यो वदेत् ।
स निष्पापो भवत्येव काशी सन्त्यज्यते कथम् ॥ 112

पुरा विन्ध्याचलप्रान्ते कश्चिदासीद् द्विजाधमः ।
किरातवृत्तिमाश्रित्य स्थितस्तत्र स सर्वदा ॥ 113

ब्रह्महत्याः कृता(ऽ)नन्तास्तेन दुष्कर्मकारिणा ।
गोहत्या वाजिहत्याश्च भ्रूणहत्याश्च कोटिशः ॥ 114

तेन पातकिना भूरि ब्रह्मस्वहरणं कृतम् ।
मातृगामी तथैवासौ भगिनीकामुकोऽप्यभूत् ॥ 115

सुरापानरतो नित्यं गोमांसं चाप्यभक्षयत् ।
गोमांसरहितं विप्रबन्धुर्नाश्नाति भोजनम् ॥ 116

अथैकदासौ रोगेण पीडितोऽभूत्सुदुष्टधीः ।
तदानीं तत्पिता वृद्धः पुत्रं संवीक्ष्य पीडितम् ॥ 117

रुदन्नश्रुसमाक्रान्तस्तमाह सुतमुद्धतम् ।
ब्राह्मणाज्जन्म सम्प्राप्य मत्त एव भवान्सुत ॥ 118

त्यक्त्वा ब्राह्मणकर्माणि कृतवानसि दुष्कृतम् ।
त्वत्कृतानां पातकानां अन्तो नास्त्येव सर्वथा ॥ 119

तत्पापफलभोगोऽग्रे भविष्यत्यतिदारुणः ।
कल्पान्तेऽपि न ते मुक्तिर्भविष्यति न संशयः ॥ 120

अघोरनरकावासो भविष्यति तव ध्रुवम् ।
इति तद्वचनं श्रुत्वा सन्तापादतिः पीडितः ।। 121

पापनाशकरोपायः कः साध्योऽस्ति ममेति च ।
ततः स वेदतत्वज्ञो जाबालश्रुतिपारगः ।। 122

पापनाशकरोपायं प्राह तत्वविदां वरः ।
पुत्राद्य त्वत्कृताघानां नाशसाधनमुत्तमम् ।। 123

अनन्यसाधनापेक्षमेकमस्ति वदाम्यहम् ।
उत्थायोदङ्मुखो भूत्वा तनुमुद्धूल्य भस्मना ।। 124

वद काशीं गमिष्यामीत्येकवारं शिवात्मिकाम् ।
एतावतैव पापानि त्वत्कृतान्यखिलान्यपि ।। 125

विनष्टानि भविष्यन्ति सद्य एव न संशयः ।
यदि शक्तिः प्रचलितुं द्वित्राण्यपि पदानि ते ।। 126

तदापुण्यसमृद्ध्यर्थं श्रीकाश्यभिमुखं चल ।
विश्वासं कुरु मद्वाक्ये भ्रान्तो मा भव सर्वथा ।। 127

जाबालश्रुतिरेवैषा काशी मोक्षकरीति या ।
प्राणनिर्याणसमये काशीति वचनं मुदा ।। 128

यः शृणोति स पापेभ्यो मुक्तोऽवश्यं भविष्यति ।
फलोन्मुखानि पुण्यानि तेषां भाग्यवतां नृणाम् ।। 129

यैः श्रूयते महामन्त्रः काशीति मरणक्षणे ।
वाराणसीति काशी वा रुद्रावास इति स्फुटम् ॥ 130

वदतां पापभीतिस्तु न भविष्यति सर्वथा ।
काशीति मनुरेकोऽयं संसारार्णवतारकः ॥ 131

जपनीयः प्रयत्नेन मुमुक्षुभिरहर्निशम् ।
इति तद्वचनं श्रुत्वा सोऽप्युद्धूल्य तनुं ततः ॥ 132

प्राह काशीं गमिष्यामीत्येकवारं कृताञ्जलिः ।
ततश्चचाल द्वित्राणि पदान्यपि स यत्नतः ॥ 133

ततः पपात तत्रैव मूर्छितोऽथ मृतोऽभवत् ।
तदानीमागताः क्रूराः कोटिशो यमकिङ्कराः ॥ 134

आगत्य बध्वा तं नेतुं समुद्युक्ता मदोद्धताः ।
अथ विष्णुविधीन्द्राद्यास्तत्कौतुकदिदृक्षया ॥ 135

पुष्पकाणि समारुह्य तं देशं समुपागताः ।
ततस्तं भस्मपूताङ्गं दृष्ट्वा विष्णुमुखाः सुराः ॥ 136

प्रणम्य पूजयामासुर्मन्दारकुसुमादिभिः ।
विष्णवादिपूजितं दृष्ट्वा तं ततो यमकिङ्कराः ॥ 137

यमाय प्रेषयामासुर्दूतं वृत्तान्तहारिणम् ।
स यमस्तन्मुखाच्छ्रुत्वा वृत्तं वृत्तान्तमादरात् ॥ 138

सचित्रगुप्तः सम्प्राप तं देशं सुरसेवितम् ।
ततो दूराद्यमो दृष्ट्वा विष्ण्वादीनमरांस्तदा ॥ 139

प्रणम्य पूजां कृत्वा च विष्णुमाह विचक्षणम् ॥ 140

यमः उवाच -

अयं पातकिनां श्रेष्ठो सुदुष्कर्मवतां वरः ।
कृता तस्य कथं पूजा भवद्भिस्तत्त्वदर्शिभिः ॥ 141

निपातनीयो यत्नेन घोरेषु निरयेष्वयम् ।
नैतस्य ब्रह्मकल्पान्तेऽप्यवश्यं निष्कृतिर्हरे ॥ 142

इति तद्वचनं श्रुत्वा मन्दहासपुरःसरम् ।
यममाह तदा विष्णुश्चित्रगुप्तादिसंयुतम् ॥ 143

विष्णुरुवाच -

मृतं विभूतिपूताङ्गं पश्यैनं यम सादरम् ।
कथमेतादृशं नेतुमुद्यमः क्रियते त्वया ॥ 144

शिवप्रिया हि शैवास्ते ये विभूतिविभूषिताः ।
एतादृशा यमद्वारं नैवार्हन्ति समीक्षितुम् ॥ 145

यातनास्तु कथं प्राप्या घोरा भस्मविभूषितैः ।
भस्मसञ्छन्नदेहानां यातनाः कथमीदृशाम् ॥ 146

श्रौतभस्मसमालिप्तं यदङ्गं मङ्गलावहम् ।
ते मङ्गलापतिं शीघ्रं उपयन्ति न संशयः ॥ 147

भस्म पूततनूनां चेद्दारुणा यदि यातना ।
तदा भुवि न कस्यापि मोक्षालाभो भविष्यति ॥ 148

श्रौतभस्मसमालिप्तनिष्क्रान्तप्राणवायवः ।
अगण्यपुण्यगन्धाढ्या भवन्ति क्रूरशासन ॥ 149

श्रौतं भस्म स्वतः पुण्यं श्रीमहादेवभूषणम् ।
भूषणं यस्य मरणे स निर्वाणमवाप्नुयात् ॥ 150

तस्य निर्वाणमभ्यर्णे यस्य भूतिर्विभूषणम् ।
भूतिर्निर्वाणदापर्णारमणाभरणं यतः ॥ 151

अयं धन्यः कृतार्थोऽयमयं मान्योऽस्मदादिभिः ।
यतो मरणवेलायां विभूतिं प्राप्तवानयम् ॥ 152

महेशानुगृहीतोऽयं भूतिभूषितविग्रहः ।
अनन्तजन्मभिर्येन पूजितः पार्वतीपतिः ॥ 153

तेनैव प्राप्यते भूतिनर्न्यिेन यम सर्वथा ।
विभूतिः कवचं येषां नाम शैवं महायुधम् ॥ 154

तेषां न पावकाद्भीतिर्भवतोऽपि भयानकात् ।
प्रालेयाचलवद्भाति मृतोऽयं भूतिभूषितः ॥ 155

पश्य पश्यायमधुना शिवलोकं गमिष्यति ।
एतादृशस्य शैवस्य दर्शनं दुर्लभं यम ॥ 156

पापाश्रयोऽयमित्येषा तव बुद्धिर्भ्रमात्मिका ।
स्थास्यन्ति पातकान्यस्मिन्कथं वा भूतिभूषिते ॥ 157

यस्य भस्मकणो नूनमेकोऽप्यघकुलाशनिः ।
किमु भस्मकणाः सान्द्राः पुण्याः सर्वाङ्गसङ्गिनः ॥ 158

कालाग्निरुद्रोपनिषज्जाबालोपनिषत्तथा ।
अन्याश्च श्रुतयो मानं भस्मनः पापनाशने ॥ 159

श्रुत्यर्थमन्यथा कर्तुं कः शक्नोत्यमरेष्वपि ।
पापापनोदकत्वेन श्रुतिभिर्भस्म कीर्तितम् ॥ 160

पापापनोदकं पुण्यफलदं भस्म पावनम् ।
धरणीयं द्विजैर्नित्यं सर्वपापापनुत्तये ॥ 161

वेदोऽयमीश्वराज्ञातः पालनीयः सुरासुरैः ।
अस्माकमीश्वराज्ञेयमनुल्लङ्घ्यैव सर्वथा ॥ 162

यद्येनं नेतुमुद्योगः क्रियते मोहतस्त्वया ।
तदा तवाधिकारोऽयं गमिष्यति न संशयः ॥ 163

शिवचिह्नधराः सर्वे शाम्भवास्ते ततस्त्वया ।
कथं नेया भविष्यन्ति यम भ्रान्तोऽसि वस्तुतः ॥ 164

क्रूरदृष्ट्याप्यमुं काल यदि पश्यसि मोहतः ।
शिवः शैवजनप्रीतस्तस्माद्दण्ड्यो भविष्यसि ॥ 165

बलावलेपादधुना यद्येनं नेतुमुद्यतः ।
तदा हरिष्ये चक्रेण मूर्धानं तरसा तव ॥ 166

शिवद्रोहरता ये च शैवद्रोहरतास्तथा ।
ते सर्वेऽपि मया काल हन्तव्याश्चक्रपाणिना ॥ 167

महादेवाङ्घ्रिरेखाभिः सृष्टं चक्रमिदं पुरा ।
मया महेश्वरादेतत् प्राप्तमत्यन्तयत्नतः ॥ 168

एतच्चक्रं यदा दत्तं मयि प्रीत्याऽथ शम्भुना ।
तदा मामाह भगवानीश्वरो भक्तवत्सलः ॥ 169

श्रीशिवः (उवाच) -

इदं चक्रं मया दत्तं तुभ्यमत्युत्तमं हरे ।
अशैवान् शैवशत्रूंश्च जहि नारायण स्वयम् ॥ 170

एवमुक्तं पुरा काल मामुद्दिश्य पुरारिणा ।
कालातः सावधानेन कर्तव्यं कुरु सत्वरम् ॥ 171

कालास्य भस्मसम्बन्धो मुक्तिहेतुरुदीरितः ।
अन्यदप्यस्ति विश्वस्यं मुक्तिहेतुद्वयं मम ॥ 172

उद्धूल्य भस्मनाङ्गानि काशीसम्मुखमास्थितः ।
अहं काशीं गमिष्यामीत्युक्तवान् अयमादरात् ॥ 173

ततः प्रचलितो भक्त्या पदानि त्रीणि सादरम् ।
ततः परं मृतोऽत्रैव महारोगसमन्वितः ॥ 174

एतादृशस्य पुण्यस्य यातना स्यात्कथं वद ।
योगिनामपि पूज्योऽयं पापयोगोऽस्य नास्त्यतः ॥ 175

घोरसंसारदावाग्निः काशीत्येषां महामुनिः ।
एतस्य वदनादद्य निःसृतः पुण्ययोगतः ॥ 176

काशीतिवर्णयुगलं (युगलं) निःसृतं यन्मुखाम्बुजात् ।
तस्य संसारनिगला गलिता एव तत्क्षणे ॥ 177

विवशेनापि काशीति येनैव समुदीरितम् ।
स सद्यः सकलापद्भ्यो मुच्यते नात्र संशयः ॥ 178

काशीति परमं मन्त्रं सर्वमन्त्राधिदैवतम् ।
मुक्तिदं मुनयः सर्वे जपन्त्यनुदिनं मुदा ॥ 179

काशीत्यमृतकल्लोललोलजिह्वा मनीषिणः ।
प्रयान्ति शिवसायुज्यं इज्यादानादिभिर्यम(र्विना) ॥ 180

काशीति वर्णयुग्मस्य प्रभावं वेद शङ्करः ।
काशीति वर्णद्वन्द्व यद्वहुदुःखापहारकम् ॥ 181

तद्विधूय द्वन्द्वदुःखं शुद्धमद्धा ददाति च ।
काशीत्युच्चरित येन परिहासेन वा यम ।
तेन स्वोपार्जितानन्तपापं नश्यत्यसंशयम् ॥ 182

पापकानननाशाय काशीत्येष हुताशनः ।
परमेशेन निर्दिष्टः शिष्टः कष्टविनाशकृत् ॥ 183

जन्ममृत्युजरादुःखमहारोगौषधं परम् ।
काशीति परमो मन्त्रो सन्त्रासयति पातकम् ॥ 184

संसारपापमत्तेभपञ्चाननमनामयम् ।
ससारगर्तमग्नानां काशीत्येष महामनुः ॥ 185

समाकर्षकरं स्पष्टं सर्वश्रेयस्करं तथा ।
ससारसर्पदष्टेन काशीति मनुमूलिका ॥ 186

ससारविषशान्त्यर्थं सेवनीया मुहुर्मुहुः ।
मुक्तिकान्ताकर्षकोऽयं काशीति मनुरुत्तमः ॥ 187

असकृद्वा सकृद्वापि काशीति मनुमुत्तमम् ।
यो जपेत्स महाघेभ्यः सद्य एव विमुच्यते ॥ 188

यम काशीति वाग्वल्ली सुवर्णद्वन्द्वपल्लवा ।
स्वर्गापवर्गफलदां बलप्रमथनप्रिया ॥ 189

काशी नाम सुधा धन्या वसुधातलवासिनाम् ।
पिबन्ति श्रद्धया सिद्धाः शमनैतां तपोधनाः ॥ 190

काशीति मन्त्रराजोऽयं पुण्यराशिसमृद्धिदः ।
अनन्ताभेद्यविविधपापराशिमहाशनिः ॥ 191

काशीत्यमृतमुत्कृष्टं सुराणामतिदुर्लभम् ।
पिबन्ति साधवो भक्त्या फाललोचनपूजकाः ॥ 192

पीत्वाप्यमृतमाशास्य सुरा भूत्वा पुनर्नराः ।
भवन्ति न तथा काशीनामामृतनिपायिनः ॥ 193

काशीत्येष महामन्त्रः श्रेष्ठोऽयममृतादपि ।
अमृतं नश्वरं यस्मादनश्वरमय मनुः ।
(अमृतं नश्वरं यस्मान्मनुरेष ह्यनश्वरः ।)
एतादृशोऽयं काशीति महामन्त्रोऽमृतात्मकः ॥ 194

काशीति नामोच्चरणं सर्वाङ्गे भूतिधारणम् ।
कस्य वा मरणेऽभ्यर्णे न निर्वाणं प्रयच्छति ॥ 195

काशीप्रयाणं काशीति नाम पीयूषभक्षण (सेवन)म् ।
विभूतिधारणं चेति त्रयं निर्वाणदं न किम् (दायकम्) ॥

एतेष्वेकैकमेवैतन्निर्वाणदमतो यम ।
एतत्त्रितयसङ्गश्चेत्किं न निर्वाणदं भवेत् ॥ 197

किञ्चाधुनैव तरसा यम शङ्करकिङ्कराः ।
आयास्यन्त्येनमनघं नेतुं शङ्करमन्दिरम् ॥ 198

यदि तान्प्रति मोहेन प्रतिकूलं वदिष्यसि ।
तदा भवन्तं तरसा ते हनिष्यन्त्यसंशयम् ।। 199

किं चैनं शाम्भवान्मोहाद्यदि नार्चयसे तदा ।
शाम्भवानर्चनात्काल प्रत्यवायो भविष्यति ।। 200

नरके पतिता:(पातिता:) पूर्वं शाम्भवानर्चकास्त्वया ।
कथमेतादृशेनाद्य त्यक्तं शाम्भवपूजनम् ।। 201

त्यज मोहं भज रतिं यम शैवान्समर्चय ।
कुरु मद्वाचि विश्वासं त्यजानाश्वासमण्वपि ।। 202

इति विष्णुवचः श्रुत्वा तं दृष्ट्वा भूतिभूषितम् ।
यमोऽतिभक्त्या नत्वा तं पूजयामास शाम्भवम् ।। 203

एतस्मिन्नन्तरे काले शिवदूताः समागताः ।
शिवनामानि गायन्तो भूतिभूषितविग्रहाः ।। 204

अथ तत्र स्थिताः सर्वे दृष्ट्वा तान् शिवकिङ्करान् ।
प्रणम्य दण्डवद्भूमौ चक्रुः पूजां पृथक्पृथक् ।। 205

ते विष्ण्वादिकृतां पूजां गृहीत्वा शिवकिङ्कराः ।
तं गृहीत्वा मृतं विप्रं ययुः शङ्करमन्दिरम् ।। 206

ततः शिवप्रसादेन गाणपत्यमवाप्तवान् ।
ततः परं विना यत्नं शिवे लीनोऽप्यभूद् द्विजः ।। 207

काशीत्युच्चारणेनापि स मुक्तः पापकृत्तमः ।
ईदृशी मुक्तिदा काशी कथं त्याज्या मनीषिभिः ।। 208

अविमुक्तं न मोक्तव्यमिति जाबालवादिभिः ।
डिण्डीरवः कृतं(:) पूर्वं वेदरूपो निराकुलः ।। 209

अविमुक्तं विमुञ्चन्ति ये वा ते श्वपचा मताः ।
सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ।। 210

अविमुक्तं महादेवोऽप्यनेकामरसंयुतः ।
न मुञ्चति ततः काशी कथं त्याज्या भवादृशैः ।। 211

असंसारी महादेवः काश्यां तिष्ठति साम्बिकः ।
संसारिणो भवन्तस्तु कथं त्यक्तुमिहेच्छथ ।। 212

पावनैः सततं सेव्या पापभीरुभिरुत्तमैः ।
काशीनिवासमात्रेण घोरसंसारशृङ्खलाः ।। 213

(त्रुट्यन्ति नियतं सद्यो गिरिशाज्ञा हि तादृशी ।)
काशीति संवदन्नित्यं काशीनाथं समर्चयन् ।। 214

कालभीतिं विहायात्र यो वसेत्स हि पुण्यकृत् ।
त्रिणेत्रान् चन्द्रचूडाङ्कान्भूतिरुद्राक्षभूषणान् ।। 215

काशीस्थांस्त्रिदशा दृष्ट्वा स्तुवन्त्यन्वहमादरात् ।
देवाः पतन्ति स्वर्गस्थाः काशीस्था न कदाचन ।। 216

अथ चैवं स्थिते सैषा काशो त्याज्या कथं भवेत् ।
श्रीमद्विश्वेश्वरं लिङ्गं यत्काश्यां राजतेऽनघम् ॥ 217

तत्साक्षान्मुक्तिदं लिङ्गं तत्त्यागोऽनुचितो द्विजाः ।
वैश्वेश्वरं लिङ्गमेकं वेदाः स्तुत्वाप्यनेकधा ॥ 218

न विश्रान्तिगता भूयः स्तुवन्त्येव मुहुर्मुहुः ।
येन वैश्वेश्वरं लिङ्गं दूरे स्थित्वा (दूरस्थेना)पि संस्मृतम् ॥

तेनापि मुच्यते विप्रा घोरसंसारसागरः ।
न दृष्टं यद्दिने लिङ्गं श्रीमद्विश्वेश्वराभिधम् ॥ 220

तद्दिनं दुर्दिनं विप्रा मेघच्छिन्नेन्न (मेघच्छन्नं न) दुर्दिनम् ।
पद्मपत्रसमानाभ्यां नेत्राभ्यामपि किं द्विजाः ॥ 221

याभ्यां साक्षात्कृतं नैव लिङ्गं विश्वेश्वराभिधम् ।
हस्ताभ्यामपि किं ताभ्यां याभ्यां प्रत्यहमादरात् ॥ 222

नार्चितं बिल्वपत्राद्यैर्लिङ्गं विश्वेश्वराभिधम् ।
जीवता येन न ध्यातं लिङ्गं विश्वेश्वराभिधम् ॥ 223

जीवताऽपि मृतं तेन धिग्धिग्धिक्तस्य जीवितम् ।
जीवितव्यं तावदेव यावद्भक्तिपुरःसरम् ॥ 224

पूज्यते ध्यायते नित्यं लिङ्गं विश्वेश्वरभिधम् ।
वेदोपनिषदां सारो लिङ्गरूपमुपाश्रितः ॥ 225

विश्वेश्वराभिधं प्राप्य काश्यां तिष्ठति सर्वदा ।
विश्वेश्वराख्या जिह्वाग्रे चित्ते विश्वेश्वरस्मृतिः ।। 226

विश्वेश्वरार्चनं हस्ते यस्य तस्य न यातनाः ।
विश्वेश्वरं विलासेनाप्येकदा वीक्ष्य सादरम् ।। 227

न बिभेति यमाऽग्रेऽपि कृतपापोऽपि सर्वथा ।
यल्लिङ्गं पार्वती भक्त्या बिल्वैःसम्पूज्य सादरम् ।। 228

मुदिताभूत्तदेवेदं लिङ्गं विश्वेश्वराभिधम् ।
यागदानादिधर्माणां फलं यल्लिङ्गदर्शनम् ।। 229

तदेवेदं परं ज्योतिर्लिङ्गं विश्वेश्वराभिधम् ।
यद्विश्वेश्वरलिङ्गस्य दर्शनं यमतर्जनम् ।। 230

तद्विश्वेश्वरलिङ्गस्य त्यागो न महतां मतः ।
यद्विश्वेश्वरलिङ्गस्य दर्शनं पापकर्षणम् ।। 231

तद्विश्वेश्वर .... .... ।
यद्विश्वेश्वरलिङ्गस्य भजनं मोक्षसाधनम् ।। 232

तद्विश्वेश्वर .... .... ।
स एव वाजपेयादिसर्वयागफलाश्रयः । 233

यः प्रेक्षते हि विश्वेशं चक्षुषा पक्ष्मपातिना ।
स एव गजदानादिमहादानविचक्षणः ।। 234

यो दद्याद्बिल्वजं पत्रं लिङ्गं विश्वेश्वराभिधे ।
स एव सर्वधर्माणां तपसामपि संश्रयः ।। 235

यो व्योमकेशं विश्वेशं सविश्वासमुपाश्रयेत् ।
तावद्गर्जत्यघकुलं कृतान्तश्च भटैस्सह ।। 236

यावन्नाभ्यर्च्यते भक्त्या लिङ्गं विश्वेश्वराभिधम् ।
तावत्तिष्ठति मर्त्येषु घोरसंसारशृङ्खला ।। 237

यावन्नाभ्यर्चितं भक्त्या लिङ्गं विश्वेश्वराभिधम् ।
तावद्दुःखानि सर्वाणि भुज्यन्ते मनुजैः सदा ।। 238

यावन्नाभ्यर्चितं .... .... ।
तावन्मरणसन्त्रासस्तावज्जन्मभयं महत् ।। 239

यावन्नाभ्यर्चितं .... .... ।
तावद्दुर्भगता तावन्नानारोगोद्भवं भयम् ।। 240

यावन्नाभ्यर्चितं भक्त्या लिङ्गं विश्वेश्वराभिधम् ।
पुरा कीर्तीश्वरो नाम राजाभूच्चक्रपालकः ।। 241

जाबालश्रुतितत्वज्ञान्ददर्श शिवपूजकान् ।
तान्दृष्ट्वा शिवभक्तांस्तु प्रणम्याभ्यर्च्य सादरम् ।
कृताञ्जलिर्मुक्त्युपायं पप्रच्छ विनयान्वितः ।। 242

**विप्रा ऊचुः -**

काशीं विना मुक्त्युपायो न क्वापीति मुनीश्वराः ।
वदन्ति श्रुतितत्वज्ञा जाबालार्थविचारकाः ॥ 243

काशी शिवतनुस्तस्मात् सैव मुक्तिप्रदा नृप ।
काशीदर्शनमेवातः कर्तव्यं मुक्तिकाङ्क्षिभिः ॥ 244

राजसूयादियागानां तपसामपि वस्तुतः
(योगस्य [1]तपसामपि) ।
काशीप्राप्तिः फलं तस्मात्काशी सेव्या मुमुक्षुभिः ॥ 245

काश्येका शरणं राजन् जनानां मोक्षमिच्छताम् ।
तदन्यच्छरणं (न्यन्मोक्षदं) क्वापि नास्ति न श्रूयतेऽपि च ॥

धर्माः क्रियन्ते बहुधा काशीप्राप्त्यर्थमादरात् ।
(बहूनां धर्मकार्याणां फलं काशीसमाश्रयः)
समेषां शिवधर्माणां फलं काशीनिषेवणम् ॥ 247

सा ततः सर्वयत्नेन साधनीया मुमुक्षुभिः ।
संसारसागरो घोरो ह्यपारः पातकाकरः ॥ 248

काशीं प्राप्य तरन्त्येनं मुनयो वीतकिल्बिषाः ।
स एव भाग्यवाँल्लोके स एव पुरुषर्षभः ॥ 249

---

[1] कायिकवाचिकमानसतपसामित्यर्थः ।

यः काशीं मुक्तिदामेत्य सन्तरेद्भवसागरम् ।
अधुना श्वः परश्वो वा मरणं चेद्भविष्यति ॥ 250

तदा वृथा गतं जन्म काशी-दर्शनवर्जितम् ।
वृथा राज्यं वृथा भोगो वृथा पुत्रधनादिकम् । 251

यदि न प्राप्यते काशी श्रीमहेशतनुः परा ।
स काशीमशको धन्यो न यस्य शमनाद्भयम् ॥ 252

वयं तु शमनात्त्रस्तास्तस्मादप्यधमाधमाः ।
अनन्तजन्मभिः काशीदर्शनं नोपलभ्यते ॥ 253

अतः परं वयं यामः श्रीशैलं प्रति सत्वरम् ।
तत्र गत्वा तपश्चर्यां करिष्यामो यथाविधि ॥ 254

अस्माभिः कल्पपर्यन्त तत्र कार्यं तपो नृप ।
ततः कल्पद्वयं कार्यं कालहस्तीशसन्निधौ ॥ 255

ततः काश्यां च कर्तव्यं कल्पत्रयमनाकुलम् ।
ततोऽरुणाचले कार्यं तपः कल्पचतुष्टयम् ॥ 256

ततो वृद्धाचले कार्यं कल्पपञ्चकमादरात् ।
ततश्चिदम्बरे कार्यं कल्पषट्कं तपो मुदा ॥ 257

कुम्भको(घो)णे ततः कार्यं कल्पसप्तकमादरात् ।
मध्यार्जुने ततः कार्यं तपः कल्पाष्टकं मुदा ॥ 258

राजन्मध्यार्जुनादीनि शिवस्थानानि कोटिशः ।
सन्ति तेष्वपि कर्तव्य तपोऽस्माभिः प्रयत्नतः ।। 259

एकैकंकल्पमेकत्र स्थित्वा यत्नपुरःसरम् ।
तपो घोरत्तर कार्यं काशीप्राप्त्यर्थंमन्वहम् ।। 260

पुरा यागादयो धर्माः कृताः सन्त्येव कोटिशः ।
अतः परं तपोमात्रं कर्तव्यमपि यत्नतः ।। 261

ततोऽस्माभिरयत्नेन काशी प्राप्ता भविष्यति ।
काशीसम्प्राप्तिमात्रेण भवामो निर्भयास्ततः ।। 262

तावदस्ति भयं राजन् यावत्काशी न लभ्यते ।
काशी दैवाद्यदि प्राप्ता गतमेव तदा भयम् ।। 263

पुरा बहूनि जन्मानि प्राप्तान्यस्माभिरीदृशैः ।
अतोऽत्यल्पानि जन्मानि प्राप्तव्यानि नृपोत्तम ।। 264

राजन् त्वया कृतैवास्ति तपश्चर्या विधानतः ।
शिवस्थानेषु सर्वेषु काशीप्राप्त्यर्थमादरात् ।। 265

श्रीकाशीप्राप्तिमुद्दिश्य विधिवद्यत्नपूर्वकम् ।
ततो भिन्नाः कृता राजन् त्वया धर्माश्चकोटिशः ।। 266

अतः परमनेनैव जन्मना तव भूपते ।
काशीप्राप्तिरयत्नेन भविष्यति न सशयः ।। 267

भाग्यवानसि धन्योऽसि कृतार्थोऽसि महीपते ।
काशी प्राप्ता त्वया यस्मादनेनैव हि जन्मना ॥ 268

सम्प्राप्य काशीं भूपाल स्वधर्ममपरित्यजन् ।
नित्ययात्रादिकर्माणि कुरु यत्नेन सन्ततम् ॥ 269

बहवो नियमाः सन्ति राजन् काशीनिवासिनाम् ।
तद्धर्माचरणं कार्यं यत्नपूर्वकमन्वहम् ॥ 270

काशी प्राप्ता मया काश्यां स्थातव्यं स्वेच्छयेति धीः ।
न कर्तव्या भ्रमेणापि काशी सा कठिना यतः ॥ 271

यात्रादिरतचित्तानां स्वस्वधर्मरतात्मनाम् ।
काशीवासो मुक्तिहेतुर्नान्येषां पृथिवीपते ॥ 272

उद्धूलनत्रिपुण्ड्राभ्यां तथा रुद्राक्षधारणात् ।
विश्वेश्वराभ्यर्चनाच्च मा मा प्रमद भूपते ॥ 273

(त्रिपुण्ड्रधारणे भस्मोद्धूलने शिवपूजने ।
रुद्राक्षधारणे चापि श्रद्धा कार्या त्वया नृप ॥)

ज्ञानवापीजलस्नानात् ज्ञानेशाभ्यर्चनादपि ।
विश्वेशाभ्यर्चनाच्च मा मा प्रमद भूपते ॥ 274

(ज्ञानवापीजलस्नाने ज्ञानेशाभ्यर्चने तथा ।
विश्वेशाभ्यर्चने चापि कुरु श्रद्धां महीपते ॥)

दुंण्ढीशपूजनात्तद्वद्दण्डपाणेश्च पूजनात् ।
विश्वेश्वरा .... .... ॥ 275

(दुण्ढीशपूजने तद्वद्दण्डपाणेश्च पूजने ।
विश्वेश्वराभ्यर्चने च कुरु श्रद्धां महीपते ॥)

अनन्तभैरवस्यापि कुमारस्यापि पूजनात् ।
विश्वेश्वराभ्यर्चनाच्च .... .... ॥ 276

(अनन्तभैरवस्यापि कुमारस्यापि पूजने ।
विश्वेश्वराभ्यर्चने च श्रद्धां कुरु महीपते ॥)

अविमुक्तीश्वरार्चातस्तथा नन्दीशपूजनात् ।
विश्वेश्वराभ्यर्चनाच्च .... .... ॥ 277

(अविमुक्तीश्वरार्चायां तथा नन्दीशपूजने ।
विश्वेश्वराभ्यर्चने च श्रद्धां कुरु महीपते ॥)

रुद्राध्यायजपात्तद्वत्पञ्चाक्षरजपात्तथा ।
विश्वेश्वराभ्यर्चनाच्च मा मा प्रमद भूपते ॥ 278

(रुद्राध्यायजपे तद्वत्पञ्चाक्षरजपे तथा
विश्वेश्वराभ्यर्चने च श्रद्धां कुरु महीपते)

भृङ्गीशदर्शनात्तद्वत्तारकेशस्य पूजनात् ।
विश्वेश्वरा .... .... ॥ 279

(भृङ्गीशदर्शने तद्वत्तारकेशस्य पूजने ।
विश्वेश्वराभ्यर्चने च श्रद्धां कुरु महीपते ।।)

भवानीदर्शनात्तद्वच्छिवाशङ्करपूजनात् ।
विश्वेश्वरा .... .... ।। 280

(भवानीदर्शने तद्वच्छिवाशङ्करपूजने ।
विश्वेश्वराभ्यर्चने च श्रद्धां कुरु महीपते ।।)

वीरकुण्डजलस्नानात् श्रीविश्वेश्वरदर्शनात् ।
विश्वेश्वरा .... .... ।। 281

(वीरकुण्डजलस्नाने श्रीविश्वेश्वरदर्शने ।
विश्वेश्वराभ्यर्चने च श्रद्धां कुरु महीपते ।।)

आमर्दकेश्वरार्चातः पापभक्षेशपूजनात् ।
विश्वेश्वरा .... .... ।। 282

(आमर्दकेश्वरार्चायां पापभक्षेशपूजने ।
विश्वेश्वराभ्यर्चने च श्रद्धां कुरु महीपते ।।)

कालकुण्डजलस्नानात्कालभैरवदर्शनात् ।
विश्वेश्वरा .... .... ।। 283

(कालकुण्डजलस्नाने कालभैरवदर्शने ।
विश्वेश्वराभ्यर्चने च श्रद्धां कुरु महीपते ।।)

नवग्रहेशपूजातः कालेशाभ्यर्चनादपि ।
विश्वेश्वरा .... .... ॥ 284

(नवग्रहेशपूजायां कालेशाभ्यर्चने तथा ।
विश्वेश्वराभ्यर्चने च श्रद्धां कुरु महीपते ॥)

कृत्तिवासेश्वरार्चातः श्रीविश्वेश्वरदर्शनात् ।
विश्वेश्वरा .... .... ॥ 285

(कृत्तिवासेश्वरार्चायां श्रीविश्वेश्वरदर्शने ।
विश्वेश्वराभ्यर्चने च श्रद्धां कुरु महीपते ॥)

शिवगङ्गाजलस्नानादाग्नीध्रेश्वरदर्शनात् ।
विश्वेश्वरा .... .... ॥ 286

(शिवगङ्गाजलस्नानेऽप्याग्नीध्रेश्वरदर्शने ।
विश्वेश्वराभ्यर्चने च श्रद्धां कुरु महीपते ॥)

ओङ्कारकुण्डस्नानाच्च श्रीमदोङ्कारदर्शनात् ।
विश्वेश्वरा .... .... ॥ 287

(ओङ्कारकुण्डस्नाने च श्रीमदोङ्कारदर्शने ।
विश्वेश्वरभ्यर्चने च श्रद्धां कुरु महीपते ॥)

पिलिप्पिलजलस्नानात् त्रिलोचनसमर्चनात् ।
विश्वेश्वरा .... .... ॥ 288

(पिलिप्पिलजलस्नाने त्रिलोचनसमर्चने ।
विश्वेश्वराभ्यर्चने च श्रद्धां कुरु महीपते ।।)

सोमेशतीर्थस्नानाच्च तथा सोमेशदर्शनात् ।
विश्वेश्वरा .... .... ।। 289

(सोमेशतीर्थस्नाने च तथा सोमेशदर्शने ।
विश्वेश्वराभ्यर्चने च श्रद्धां कुरु महीपते ।।)

केदारकुण्डस्नानाच्च तथा केदारदर्शनात् ।
विश्वेरा .... .... ।। 290

(केदारकुण्डस्नाने च तथा केदारदर्शने ।
विश्वराभ्यर्चने च श्रद्धां कुरु महीपते ।।)

शिवभक्तप्रणामाच्च शिवभक्तार्चनादपि ।
विश्वेश्वरा .... .... ।। 291

शिवभक्तप्रणामे च शिवभक्तार्चने तथा ।
विश्वेश्वराभ्यर्चने च श्रद्धां कुरु महीपते ।।)

सर्वदा शिवनामानि जप काश्यां प्रयत्नतः ।
पूजयस्व महादेवं सततं बिल्वपल्लवैः ।। 292

भस्म मु(नो)द्धूलनं कृत्वा त्रिपुण्ड्रं च ततः परम् ।
रुद्राक्षधारणं कृत्वा जप मन्त्रं शिवात्मकम् ।। 293

नित्ययात्राः पक्षयात्रा मासयात्राश्च भूरिशः ।
तथैव वारयात्राश्च कर्तव्यास्तत्र सादरम् ॥ 294

पूजनीयाः प्रयत्नेन शैवाः काशीनिवासिनः ।
नित्यं शिवकथाः श्राव्याः श्रोतव्यास्तत्र सादरम् ॥ 295

यदि मोहात्प्रमादाद्वा तत्र भस्मादिधारणम् ।
यस्त्यजेत्स च पापी स्यात्प्राप्नुयाद्यातनां ध्रुवम् ॥ 296

एकमुक्तप्रकारेण नियमेनान्वहं द्विजैः ।
काशीवासोऽतियत्नेन कर्तव्यो मुक्तिकाङ्क्षिभिः ॥ 297

शैवधर्मरतो भूत्वा काश्यां वस नराधिप ।
स्वप्नेऽपि शैवधर्मणां न कुरूल्लङ्घनं भ्रमात् ॥ 298

किञ्च काश्यां निवसतां सतामपि सहस्रशः ।
उपसर्गा भविष्यन्ति सोढव्यास्तेऽतियत्नतः ॥ 299

उपसर्गपराभूतो यः काशीं त्यक्तुमिच्छति ।
तन्मुखस्था मुक्तिभिक्षा पतिष्यत्यवनीतले ॥ 300

उपसर्गानसङ्ख्यांश्च सम्प्राप्तानगणय्य यः ।
काश्यां तिष्ठति यत्नेन तस्य मोक्षो भविष्यति ॥ 301

काशी चेत्त्यज्यते मोहादुपसर्गासहिष्णुना ।
तदा तस्यापवर्गस्तु न कदापि भविष्यति ॥ 302

एकदैवोपसर्गाश्चेत्कुर्वन्त्युच्चाटनं तदा ।
छित्वा शस्त्रेण चरणौ काश्यां स्थातव्यमास्तिकैः ॥ 303

येन केनापि रूपेण काश्यां स्थातव्यमास्तिकैः ।
मर्तव्यं च प्रयत्नेन काश्यामेव मुमुक्षुभिः ॥ 304

महास्मशानसंविष्टं कुणपं सर्वथा नरैः ।
नान्यत्र नेयं तत्रैव भस्मसात्कार्यमादरात् ॥ 305

महास्मशानमरणं सुराणामपि(?) दुर्लभम् ।
(महास्मशानमरणं प्राणिनामतिदुर्लभम्)
अतस्तत्र प्रयत्नेन(?) मर्तव्यं मुक्तिकाङ्क्षिभिः ॥ 306

(अतस्तत्रैव मरणं काङ्क्षितव्यं विमुक्तये ।)
याच्यतु मरणं काश्यां ब्रह्मविष्णवादिभिः सुरैः(?) ।
किम्पुनर्मादृशैर्मर्त्यैर्नित्यधर्मसमाश्रितैः ॥ 307

ब्रह्मविष्णवादिदेवानां काश्यां मरणमिच्छताम् ।
भविष्यत्येव मरणं प्रलये समुपस्थिते ॥ 308

मरणं मङ्गलं काश्यां केवलं मरणं ततः ।
तदर्थं विविधा यत्नाः कर्तव्या मुक्तिकाङ्क्षिभिः ॥ 309

नृप पूर्वं शरीराणि दग्धान्यन्यत्र भूरिशः ।
शरीरमेकदा काश्यां दाहनीयं प्रयत्नतः ॥ 310

(नृपानन्तशरीराणि दग्धान्यन्यत्र जन्मसु ।
सकृद्दग्धे तु देहेऽत्र पुनर्दाहोऽस्य नो भवेत् ।। 311

स काश्यां काशते श्रीमान्महेशानुग्रहेण यः ।
स्वदेहदहनोद्भूतभस्मराशिं विलोकयेत् ।। 312

शरीरं भस्मसात्कृत्वा काश्यां तेनैव भस्मना ।
यः काशीं भूषयेत्तेन सम्प्राप्तं शेषभूषणम् ।। 313

ये त्यक्ततनवः काश्यां त एवातनवः पुनः ।
वामार्धवामातनवश्चन्द्रचूडा भवन्ति च ।। 314

देवतासार्वभौमत्वं यस्याभिलषितं भवेत् ।
तेन काश्यां तनुत्यागः कर्तव्यः सावधानतः ।। 315

काश्यां शरीरमात्रस्य त्यागेनैव महेश्वरः ।
दत्वा पञ्चाक्षरं शैवं स्वस्वरूपं प्रयच्छति ।। 316

काश्यां त्यक्तशरीरेण शैवेन मदनान्तकः ।
महेशो दृश्यते साक्षात्सर्वलक्षणसंयुतः ।। 317

यस्य (येन) साक्षान्महादेवदर्शनं समु(म)पेक्षितम् ।
तेन काश्यां प्रयत्नेन मर्तव्यं मुक्तिकाङ्क्षिणा ।। 318

मरणाभिमुखः काश्यां यदा भवति मानवः ।
तदा शिवोत्तरीयेण तं वीजयति चेश्वरी ।। 319

तत्कर्णकुहरे शम्भुस्तारकं समुपादिशेत् ।
पञ्चाक्षरं महामन्त्रं शैवं संसारतारकम् ।। 320

तदा गणाः समागत्य दुन्दुभिध्वनिपूर्वकम् ।
चारुचामरहस्ताश्च तन्वन्ति विजयध्वनिम् ।। 321

मुक्तिकन्यां ततस्तस्मै शिवो मङ्गलपूर्वकम् ।
ददाति मङ्गलाचारान्कुर्वन्ति प्रमथास्ततः ।। 322

मरणं मङ्गलं तस्मात्काश्यां भवति भूपते ।
मुक्तिकन्याविवाहार्थं काश्यां मर्तव्यमेकदा ।। 323

ततः परं न मरणं कदाचिदपि जायते ।
भवत्यन्यत्र मरणे बहुधा मरणव्यथा ।। 324

दूरीकरोति तां देवो महेशो मङ्गलायुतः ।
दर्शनार्थं महेशस्य शिवप्राप्त्यर्थमेव च ।। 325

मर्तव्यं मानवैर्धन्यैः काश्यां यत्नपुरःसरम् ।
इति तद्वचनं श्रुत्वा स कीर्तीशो नराधिपः ।। 326

अत्यन्ततुष्टहृदयः पूजयामास तान् द्विजान् ।
ततो वस्त्राणि रत्नानि गजान्ग्रामांश्च कोटिशः ।। 327

स ददौ शिवभक्तेभ्यस्तदैव प्रीतमानसः ।
ततस्तान्प्रेषयामास जाबालश्रुतिपारगान् ।। 328

ततो राज्यं ददौ सर्वं स्वपुत्राय नराधिपः ।
जाबालोक्तप्रकारेण सङ्कल्पादीनि निर्ममः ॥ 329

कृत्वा स निर्ययौ राजा काशीमुद्दिश्य भक्तितः ।
काशीं प्राप्तः स भूपालस्त्यक्तभूपाललक्षणः ॥ 330

नियमेनैव सततं काशीवासं चकार हि ।
नित्यमन्तर्गृहादीनि कुर्वन्कर्माणि भूपतिः ॥ 331

काश्यां शिवकथां शृण्वन्नुवास विधिपूर्वकम् ।
ततस्तु भूपतिं दृष्ट्वा कदाचित्पार्वतीपतिः ॥ 332

भूपचित्तपरीक्षार्थमुपसर्गानुपासृजत् ।
अथ काशीं परित्यक्तुं मतिर्जातास्य तत्क्षणे ॥ 333

ततो गन्तुं समुद्युक्तः सस्मार द्विजशासनम् ।
इतस्ततो भूपतिस्तु तदा गच्छन् पिशाचवत् ॥ 334

दुःखितः सन्कथं त्याज्या काशीत्येवमचिन्तयत् ।
तदानीं स्थातुमेकत्र क्षणमात्रमपि स्थिरम् ॥ 335

नाभूत्तस्य मनो विप्र गन्तुकामस्य भूपतेः ।
ततो विचिन्ता सञ्जाता स्वशरीरं स रज्जुभिः ॥ 336

बबन्धातिप्रयत्नेन तरुमूले महीपतिः ।
ततस्तत्तरुमूलेभ्यो दन्दशूका विनिर्गताः ॥ 337

रज्जुबन्धं ततश्छित्वा भूपस्तस्माद्विनिर्गतः ।
ततः सम्पाद्य काष्ठानि दत्वा वह्निं स भूपतिः ॥ 338

वह्निं प्रदक्षिणीकृत्य प्रविष्टस्तत्र पावके ।
ततः समभवद्वृष्टिस्तया द(वृ)ष्ट्या स पावकः ॥ 339

शशाम सद्यः सहसा महावृष्टिर्जलाप्लुता ।
ततः परं स भूपालः किं कार्यमिति चिन्तयन् ॥ 340

चकार चरणच्छेदं स्वत एव तदा द्विजाः ।
ततः परं महादेवो धृत्वा मानुषविग्रहम् ॥ 341

आरुह्य तुरगं दिव्यं तदा राजानमब्रवीत् ॥ 342

श्रीसदाशिवः (उवाच) -

किमर्थं चरणौ छिन्नौ रक्तपङ्कजसन्निभौ ।
तव राजन् शरीरस्य दुःखमद्याभवन्महत् ॥ 343

संयोजयामि चरणौ यथास्थाने नराधिप ।
अहं तु वैद्यविद्यायां समर्थोऽस्मि न संशयः ॥ 344

सन्त्यौषधानि राजेन्द्र सद्यः स्वास्थ्यप्रदानि मे ।
काश्यां यात्राद्यकरणे प्रत्यवायो भविष्यति ॥ 345

छिन्नपादस्य ते राजन् कथं यात्रादिकं भवेत् ।
काश्यां वैश्वेश्वरं लिङ्गं न दृष्टं येन यद्दिने ॥ 346

तद्दिने नैव गृह्णीयात्स पानीयमपि ध्रुवम् ।
विश्वेश्वरमनभ्यर्च्य जलं वा यः पिबेन्नरः ॥ 347

स नरः सर्वथा राजन्प्रेतः पापी भवेद् ध्रुवम् ।
अत्रानर्चितविश्वेशान् क्रूरः श्रीकालभैरवः ॥ 348

अघोरयातनायुक्तान्करोत्याचन्द्रतारकम् ।
अत्यन्तकठिनो नूनं काशीवासो बपुष्मताम् ॥ 349

अस्यां काश्यां निवसतां नियमाचरणं विना ।
न स्थातुं शक्यते राजन् क्षणमात्रमपि ध्रुवम् ॥ 350

काशी दैववशात्प्राप्ता मनुष्येण त्वया नृप ।
सुराणामपि काशीयं भवत्यत्यन्तदुर्लभा ॥ 351

सम्प्राप्यापि नरः काशीं विश्वेशं प्रत्यहं यदि ।
न पूजयति बिल्वाद्यैस्तस्य जन्म निरर्थकम् ॥ 352

राजन् भवन्ति कर्माणि यत्राक्षय्यानि सन्ततम् ।
तत्तु विश्वेश्वरस्थानं सेव्यं सर्वशरीरिभिः ॥ 353

यत्र तप्तं हुतं जप्तमनन्तफलदायकम् ।
अभीप्सितार्थाधिकदमत्र केन न गम्यते ॥ 354

शतकोटिसहस्राणि शतकोटिशतानि च ।
लिङ्गानि तेन दृष्टानि वीरेशो येन वीक्षितः ॥ 355

यत्र स्थातुं न शक्येत विना भैरवदर्शनम् ।
स नित्यमतियत्नेन द्रष्टव्यः कालभैरवः ॥ 356

द्रष्टव्यानि प्रयत्नेन पूजनीयानि चान्वहम् ।
तानि तानि शिवस्थानान्यन्वहं भक्तिपूर्वकम् ॥ 357

सेवनीयानि गत्वैव सेव्याः शैवाश्च सादरम् ।
पादहीनोऽसि भूपाल काशीयात्रा सुदुष्करा ॥ 358

अतोऽश्वं शीघ्रमारुह्य समायाहि मदालयम् ।
यतोऽश्वारोहणे शक्तिस्तव नास्त्यधुना ततः ॥ 359

अश्वमारोहयिष्यामि त्वामिदानीं नराधिप ।
इति तद्वचनं श्रुत्वा दुःखितोऽपि नराधिपः ॥ 360

धृतधैर्योऽब्रवीद्वाक्यं शिवं मानुषविग्रहम् । 361

राजोवाच -

तवौषधप्रयोगेषु शक्तिः प्रायो भविष्यति ।
किं पद्भ्यां जीवनेनापि किं देहेनापि तद्वद ॥ 362

मरिष्याम्यधुनैवेह देहापेक्षा न मे ध्रुवम् ।
अनेकजन्मतपसा काशी प्राप्ता मयाऽधुना ।। 363

काशीक्षेत्रं समागत्य विना विश्वेशपूजनम् ।
ततो निर्गमनं मोहान्महापापफलं भवेत् ।। 364

काशीं हित्वा गते चापि मर्तव्यं यत्र कुत्रचित् ।
तत्रापि मरणे दुःखं पुनर्जन्मापि दुस्तरम् ।। 365

जनित्वा बहुशो मृत्वा भुक्त्वा च यमयातनाः ।
पुनश्च गर्भवासादिदुःखं प्राप्तं मया बहु । 366

यदि काश्यां भवेन्मृत्युः पुनर्जन्म न मे ध्रुवम् ।
विच्छिन्नचरणस्यापि मम दुःखं न जायते ।। 367

काश्यामानन्दरूपिण्यां मयास्यां स्थीयते यतः ।
मया निष्कण्टका सर्वा पृथिवी पालिता यदा ।। 368

तदेदृशं सुखं नाप्तं यत्काशीवाससम्भवम् ।
यदा मया पुरा रम्ये रत्नसिंहासने स्थितम् ।। 369

तदेदृशं सुखं (नाप्तं) प्राप्तं यत्काशीवाससम्भवम् ।
रम्भानिभामितस्त्रीभिः सेवितोऽहं यदा मुदा ।। 370

तदेदृशं सुखं नाप्तं यत्काशीवाससम्भवम् ।
अथाप्यैतत्सुखं हित्वा गन्तुमिच्छा प्रजायते ।। 371

अभाग्यस्य फलं नूनमिदमत्र न संशयः ।
काश्यां सन्त्यक्तयात्राणां घोरा भैरवयातना ।। 372

काशीत्यागरतिर्जातेत्यतश्छिन्नं पदद्वयम् ।
अधुनोद्धूलनं कृत्वा सम्पूज्य च सदाशिवम् ।। 373

ततः प्राणानहं त्यक्ष्ये शिरश्छेदपुरःसरम् ।
ततो मरणमात्रेण महादेवः कृपानिधिः ।। 374

शैवं पञ्चाक्षरं मह्यं तारकं दास्यति ध्रुवत् ।
अद्य द्रक्ष्यामि गिरिशं गिरिजाश्लिष्टविग्रहम् ।। 375

तत्प्रेक्षणानुक्षणे मे मुक्तिः प्राप्या भविष्यति ।
इत्युक्त्वोद्धूल्य सर्वाङ्गं भस्मनाभ्यर्च्य चेश्वरम् ।। 376

चकर्त स्वशिरो राजा पश्यति श्रीमहेश्वरे ।
ततः प्रसन्नो भगवान् महादेवः कृपानिधिः ।। 377

शिरः संयोजयामास यथास्थानं द्विजोत्तमाः ।
विच्छिन्नौ चरणौ चापि यथावद्योजितौ ततः ।। 378

समुत्थाय महीपालो ददर्श गिरिजापतिम् ।
अनन्तभास(नु) सङ्काशं चन्द्रमौलिं पिनाकिनम् ।। 379

नानाभरणविद्योतच्छैलकन्यासमन्वितम् ।
संसेवितं गणवरैर्विविधैश्च महौजसम् ।। 380

भासयन्तं बहुविधैः स्वप्रभाभिर्दिशो दश ।
ततो दृष्ट्वा महादेवं भूपो भक्त्या पुनः पुनः ।। 381

प्रणम्याभ्यर्च्य पुष्पाद्यैस्ततःस्तोतुं समारभत् ।
(स्तोतुं समुपचक्रमे ।)

राजोवाच -

श्रीमहादेव देवेश प्रसीद करुणानिधे ।। 382

देवतासार्वभौमेश शरणागतवत्सल ।
मथ्यमानाब्धिसम्भूतकालकूटविषादन ।। 383

चण्डगर्वपरिभ्राम्यन्नरसिंह्मनिषूदन ।
सोमसूर्याग्निनयनभूषिताऽऽनन्दविग्रह ।। 384

दिग्व्याप्तनानावदन धृतमेरुशरासन ।
मृत्युञ्जय महादेव महापातकमर्दन ।। 385

निराकार निराधार निरीश्वर परात्पर ।
अनेकामेयकल्याणगुणसागर शङ्कर ।। 386

धृतगुल्फपरिभ्राजदनेकमणिनूपुर ।
भक्तकल्पतरोऽनन्तसुरसङ्घनिषेवित ।। 387

धृतरत्नकिरीटांशुपराभूतनिशाकर ।
निजाकारतिरोभूतसुधापूर महेश्वर ।। 388

परिषेवितदिक्पाल कालकालामलामल ।
विशाल(फा)भालविलसज्ज्वालामालाकुल प्रभो ॥ 389
(पाहि मां देहि मे मुक्तिं द्रुतमानन्दरूपिणीम् ।)

इति स्तुत्वा महादेवं स भूपालः कृताञ्जलिः ।
पुनः प्रणम्य बहुधा पूजयामास सादरम् ॥ 390

तं तथा धीरचित्तं भूपं दृष्ट्वा महेश्वरः ।
सन्तोषं जनयन्नाह मन्दहासपुरःसरम् ॥ 391

श्रीशिवः उवाच -

नृप कीर्तीश्वरेत्येतन्नाम ते सार्थकं ध्रुवम् ।
धन्योऽसि कृतकृत्योऽसि परलोकपरो ह्यसि ॥ 392

काश्यां तवेदृशी भक्तिर्या जाता मुक्तिदायिनी ।
ईदृशी नाऽऽस्ति कस्यापि त्वदन्यस्य महीपते ॥ 39

इयं या भक्तिरुत्पन्ना काश्यां तव नराधिप ।
सा भक्तिर्भूरिभाग्येन तपसा चाभवद् ध्रुवम् ॥ 394

राज्यभोगादिकं सर्वं परित्यक्तं त्वया नृप ।
शरीरं त्यक्तुमुद्युक्तं काश्यां भूरितपोबलात् ॥ 395

तृणीकृत्योपसर्गांस्तु काश्यां मर्तुं समुद्यतः ।
कस्य वान्यस्य भविता बुद्धिरेतादृशी नृप ॥ 396

सुखेन संवसात्रैव मदर्चनपरायणः ।
नृपते जीवनापेक्षा यावत्तावदनातुरः ।। 397

काशीवासं कुरु प्रीत्या काशीत्यागमतिं त्यज ।
कदाप्यतःपरं राजन् काशीत्यागमतिस्तव ।। 398

न भविष्यति तत्सन्त्यं दास्याम्यभयमप्यहम् ।
नित्ययात्रादिकर्माणि सर्वाणि कुरु सर्वदा ।। 399

मत्कथाश्रवणासक्तः सन्तुष्टः सर्वदा वस ।
न भविष्यति ते राजन् कालभैरवयातना ।। 400

स्वेच्छयात्र तनुत्यागं करिष्यति यदा भवान् ।
तदा दास्याम्यहं मुक्तिं तुभ्यमत्र न संशयः ।। 401

राजन्नभयहस्तोऽयं दीयते तव मूर्धनि ।
तुभ्यं काश्यां तनुत्यागे मुक्तिं दास्याम्यसंशयम् ।। 402

इदमेव शरीरं ते काश्यां दग्धं भविष्यति ।
दग्धे देहेऽथ संसारः सर्वो दग्धो भविष्यति ।। 403

यस्य दग्धा तनुः काश्यां एकदा तस्य भूपते ।
न भविष्यति संसारः सत्यं सत्यं वदाम्यहम् ।। 404

संसारखेदखिन्नानां काश्येका शरणं नृप ।
अयमर्थस्तु निर्णीतो वेदेषु निखिलेष्वपि ।। 405

अतः काश्यां वसानन्यो मामेवाराधयन्मुदा ।
कुरु वेदोक्तमार्गेण सत्कर्माणि निरन्तरम् ॥ 406

तानि कर्माणि सर्वाणि मह्यमेव निवेदय ।
अहमेको वेदवेद्यः सर्ववेदान्तसंस्तुतः ॥ 407

मत्तः परतरं नास्ति सर्वथा सत्यमुच्यते ।
त्वं तारयामि संसाराद्योऽनन्यशरणोऽनिशम् ॥ 408

मामेव चिन्तयेद्भक्त्या त्यक्तान्यामरचिन्तनम् ।
मामर्चय प्रयत्नेन कुरु मन्नामकीर्तनम् ॥ 409

मामेव चिन्तयानन्यो मामेव शरणं व्रज ।
धर्मानन्यान्परित्यज्य यः कुर्यान्मम पूजनम् ॥ 410

स सर्वदा मदासक्तो मामेत्येव न संशयः ।
मामभ्यर्च्य नरो भक्त्या कालकालमनाकुलम् ॥ 411

कालकालभटेभ्यो वा न विभेत्येव सर्वथा ।
दृष्ट्वा कालोऽपि मद्भक्तानन्वहं विनयान्वितः ॥ 412

कृताञ्जलिपुटो भूत्वा सोत्कण्ठमधितिष्ठति ।
अतो मदर्चनपरो मद्भक्तार्चनतत्परः ॥ 413

काश्यां वस महिपाल सन्तुष्टहृदयः सदा ।
इत्युक्त्वा श्रीमहादेवस्तत्रैवान्तरधीयत ॥ 414

स भूपालोऽपि सन्तुष्टः काश्यामेवावसद्द्विजाः ।
अतो धैर्येण सततं काश्यां स्थातव्यमास्तिकैः ॥ 415

मर्त्यानां त्यक्तधैर्याणां काशीवासः कथं भवेत् ।
पुरा काश्यां मुनिवरा नित्यं धर्मपरायणाः ॥ 416

कलिकालं समायतं ददृशुर्योगतत्पराः ।
ततस्ते मुनयः सर्वे स्थित्वा विश्वेशसन्निधौ ॥ 417

अत्यन्तं चुक्रुशुः सर्वे कलिकालभिया द्विजाः ।
कलिकालः समायाति किं कर्तव्यमतः परम् ॥ 418

कलिरायास्यति स्वेच्छं महापापकुलाकुलः ।
न स्थास्यन्ति कलौ घोरे शैवा धर्माः सनातनाः ॥ 419

शैवधर्मेषु नष्टेषु भुक्तिमुक्तिकथा कुतः ।
भुक्तिमुक्तप्रसङ्गो हि शिवाधीनो न संशयः ॥ 420

अशैवधर्मनिरता भविष्यन्ति कलौ नराः ।
अशैवधर्मनिरता गमिष्यन्ति यमालयम् ॥ 421

अशैवधर्मनिरतान्दृष्ट्वैव यमकिङ्कराः ।
पातयिष्यन्ति घोरेषु नरकेषु पुनः पुनः ॥ 422

अशैवधर्मनिष्ठायां कल्पान्तेऽपि न निष्कृतिः ।
अशैवानां समुद्धर्ता नरकेभ्यो न कश्चन ॥ 423

काश्यामपि मृतान्मर्त्यान्शैवधर्मविवर्जितान् ।
आचन्द्रार्कं यातनासु पातयिष्यति भैरवः ॥ 424

कलौ सदाशिवे भक्तिर्न भविष्यत्ति सर्वथा ।
शिवभक्तिविहीनानां यातनैव भविष्यति ॥ 425

कलौ शिवार्चने भक्तिर्जनानां न भविष्यति ।
शिवार्चनपरित्यागे यातनैव भविष्यति ॥ 426

शिवसंस्मरणे भक्तिर्न भविष्यति सर्वथा ।
शिवसंस्मरणत्यागे यातनैव भविष्यति ॥ 427

शिवसङ्कीर्तने भक्तिर्न भविष्यति सर्वथा ।
शिवसङ्कीर्तनत्यागे यातनैव भविष्यति ॥ 428

कलावुद्धूलने भक्तिर्न भविष्यति सर्वथा ।
उद्धूलनपरित्यागे यातनैव भविष्यति ॥ 429

त्रिपुण्ड्रधारणे श्रद्धा कलौ नैव भविष्यति ।
त्रिपुण्ड्रधारणत्यागे यातनैव भविष्यति ॥ 430

रुद्राक्षधारणे भक्तिः कलौ नैव भविष्यति ।
रुद्राक्षधारणत्यागे यातनैव भविष्यति ॥ 431

रुद्राध्यायजपे भक्तिः कलौ नैव भविष्यति ।
रुद्राध्यायजपत्यागे यातनैव भविष्यति ॥ 432

पञ्चाक्षरजपे भक्तिः कलौ नैव भविष्यति ।
पञ्चाक्षरपरित्यागे यातनैव भविष्यति ।। 433

कलौ महेशयात्रासु भक्तिर्नैव भविष्यति ।
शिवयात्रापरित्यागे यातनैव भविष्यति ।। 434

बिल्वपत्रार्चने भक्तिः कलौ नैव भविष्यति ।
बिल्वार्चनपरित्यागे यातनैव भविष्यति ।। 435

मोक्षप्रदे शिवक्षेत्रे कलौ भक्तिर्गमिष्यति ।
तस्यां गतायां मर्त्यानां यातनैव भविष्यति ।। 436

कलौ काश्यामवस्थाने भक्तिर्नैव भविष्यति ।
तत्र भक्तिपरित्यागे यातनैव भविष्यति ।। 437

कलौ कलुषचित्तानां काशीत्यागो भविष्यति ।
काशीत्यागे भविष्यन्ति यामीया यातनाः ध्रुवम् ।। 438

अशैवानां कलौ काश्यां अवस्थानं भविष्यति ।
तेषां भविष्यत्यनिशं घोरा भैरवयातना ।। 439

द्वित्राः शैवा भविष्यन्ति कलौ काश्यां शिवप्रियाः ।
तेषां शिवैकनिष्ठानां काश्यां मुक्तिर्भविष्यति ।। 440

शैवधर्मरताः शिष्टाः कलावत्यन्तदुर्लभाः ।
श्रद्धा शैवेषु धर्मेषु कलौ नैव भविष्यति ।। 441

कलावपि यदि श्रद्धा शैवधर्मेषु जायते ।
तदा पुण्यस्य नान्तोऽस्ति स साक्षान्मोक्षदायकः ।। 442

शैवधर्मरतो भूत्वा कलावव्यभिचारतः ।
यः शिवं पूजयेन्नित्यं तस्य मुक्तिरदूरतः ।। 443

महाभाग्यवतामेव कलौ भक्तिर्महेश्वरे ।
शैवभक्तिर्यतस्साक्षात् धर्मादिफलदायिनी ।। 444

कलिं प्राप्यापि काश्यां यः शैवधर्मरतो भवेत् ।
तस्य भाग्यस्य नेयत्ता स एव पुरुषोत्तमः ।। 445

कलौ न शैवधर्मेषु श्रद्धा सञ्जायते नृणाम् ।
अस्माभिः शोषणीयानि शरीराणि प्रयत्नतः ।। 446

नो चेत्कलियुगेऽस्माकं काश्यां वासोऽतिदुर्लभः ।
उपवासैः शोषितानि शरीराणि शनैः शनैः ।। 447

काश्यामेव पतिष्यन्ति तेन मुक्तिर्भविष्यति ।
न यावत्कलिरायाति तावत्काश्यां तनुव्ययः ।। 448

नानाप्रयत्नैः कर्तव्यः शीघ्रं निर्विघ्नमुक्तये ।
इति सङ्कल्प्य ते सर्वे मुनयो ब्रह्मवादिनः ।। 449

नित्यं निरशनाश्चेरुः काश्यां यात्रादितत्पराः ।
बलात्पानीयमपि तैः परित्यक्तं तपोधनैः ।। 450

वल्कलान्यपि तैः सर्वैः त्यक्तानि विगतत्रपैः ।
भस्मोद्धूलितसर्वाङ्गाः रुद्राक्षाभरणप्रियाः ।। 451

सदाशिवकथासक्ताः सदा काश्यां स्थिता द्विजाः ।
सर्वेऽप्यनशना एव काश्यां तेपुर्मुनीश्वराः ।। 452

अन्ते शिवप्रसादेन मुक्ताश्च मुनिपुङ्गवाः ।
अतः काश्यां अनशनैस्तपोभिश्च प्रयत्नतः ।। 453

शोषयित्वा शरीराणि मर्तव्यं मुक्तिकाङ्क्षिभिः ।
दैवादनशनं जातं भवतामधुना द्विजाः ।। 454

उपोषणैः शोषितेषु शरीरेषु शनैः शनैः ।
भविष्यत्येव मरणं काश्यां मोक्षैकसाधनम् ।। 455

द्विजा मुक्त्यर्थिनो यूयं सोढा(ढ्वा) दुःखानि सन्ततम् ।
काश्यां तिष्ठन्तु मुक्त्यर्थं शान्ता निश्चलमानसाः ।। 456

इहामुत्रफलत्यागः शान्तिर्दान्तिस्तपोबलम् ।
यस्य तस्यैव विहितः काशीवासो विमुक्तिदः ।। 457

उपसर्गसहिष्णुत्वं शान्तिः स्वकृतकर्मणाम् ।
समर्पणं महेशाय फलत्यागोऽनहङ्कृतिः ।। 458

एतादृशानां सततं शिवयात्रारतात्मनाम् ।
काशीवासस्ततो मुक्तिर्महेशानुग्रहाद्द्विजाः ।। 459

पुरा वेदनिधिर्नाम तपस्वी शिवपूजकः ।
अविमुक्तमिदं क्षेत्रं समाश्रित्य स्थितो द्विजाः ॥ 460

स सदा भस्मपूताङ्गः सदा रुद्राक्षभूषणः ।
सदा रुद्रजपोद्युक्तः सदा गौरीप्रियार्चकः ॥ 461

कर्मणा मनसा वाचा स महेशार्चनोत्सुकः ।
स मोक्षार्थी शिवं काश्यां बिल्वपत्रैः समर्चयन् ॥ 462

प्रत्यहं शिवपूजान्ते गिरिजाकान्तमव्ययम् ।
करोति प्रार्थनामेनां[मिवं] कृताञ्जलिपुटो द्विजाः ॥ 463

हर शम्भो महादेव काशीवासं प्रयच्छ मे ।
तरसा तनुरीशान काश्यामेव पतत्वियम् ॥ 464

शिव शम्भो महेशेति गौरीशोमेश शङ्कर ।
वदतो मे महादेव प्राणा यान्तु कृपानिधे ॥ 465

विभूतिभूषिताङ्गस्य रुद्राक्षाभरणस्य मे ।
त्वन्मूर्तिं ध्यायतः शम्भो भूयात्काश्यां तनुव्ययः ॥ 466

शिवलिङ्गं पश्यतो मे बिल्वपत्रैः समर्चितम् ।
प्राणा निर्यान्तु हे शम्भो सत्वरं त्वदनुग्रहात् ॥ 467

एवं सम्प्रार्थ्य गौरीशं दत्वा पुस्पाञ्जलिं ततः ।
प्रणामादीनि कृत्वेशं ध्यायन्नेव व्यवस्थितः ॥ 468

एवं स्थिते वेदनिधिः सायं सम्पूज्य शङ्करम् ।
पञ्चाक्षरं जपन्नेव चकार शयनं द्विजाः ॥ 469

ततः स्वप्नः समभवत्तस्य वेदनिधेर्द्विजाः ।
जातस्वप्नः स मामेत्य मयि स्वप्नं न्यवेदयत् ॥ 470

तदुक्ता स्वप्नवार्ता च वक्ष्यते श्रूयतां द्विजाः ।
स्वप्ने किलासौ मेधावी नर्मदातटमीयिवान् ॥ 471

तत्र दृष्टास्तपोनिष्ठा मुनयस्तेन शाम्भवाः ।
ततो वेदनिधिश्चक्रे पूजां तेभ्यो यथाविधि ॥ 472

स पृष्टस्तैर्मुनिवरैः कुतो वाद्य समागतम् ।
गम्यते क्व च वा किं ते नाम नो वद चादरात् ॥ 473

इति पृष्टः स तैः शैवैः स्वनाम समुदीरयन् ।
ननाम दण्डवद्भूमौ कृताञ्जलिपुटो द्विजाः ॥ 474

अथ ते मुनयः सर्वे दृष्ट्वा वेदनिधिं पुनः ।
अवोचन्नतपूताङ्गं शिवचिह्नविराजितम् ॥ 475

मुनय ऊचुः -

त्वया वेदनिधे पूर्वं काश्यां स्थितमिति श्रुतम् ।
उद्धूलनत्रिपुण्ड्रादिशिवाराधनपूर्वकम् ॥ 476

काश्यां त्वया तपश्चर्या क्रियते चेति संश्रुतम् ।
त्वत्कृतेनोग्रतपसा प्रीतः शङ्कर इत्यपि ॥ 477

ईदृशेन त्वया काशी कथं त्यक्ता वदस्व(दाद्य) नः ।
काशीत्यागे मतिरभूत्कथं वा तव सुव्रत ॥ 478

त्रिप्रवीर्योद्भवस्यापि तव वेदनिधेर्द्विज ।
कथं वा समभूत्सेयं ईदृशी त्यागधी (काशीत्यागमति)र्वद ॥

भवान्वेदनिधिर्नाम्ना केवलं नेति शुश्रुमः ।
किन्त्वर्थतोऽपीत्यनिशं नाम संश्रूयते तव ॥ 480

घृतकोशातकीव त्वं नाम्ना वेदनिधिस्तु न ।
भवानद्धाऽर्थनामभ्यां श्रुतो वेदनिधिर्ध्रुवम् ॥ 481

भवान्विदितवेदार्थः काशीतत्त्वविदप्युत ।
एतादृशेन भवता काशीत्यागः कथं कृतः ॥ 482

प्रायशो विस्मृता वेदा वेदार्थोऽपि च विस्मृतः ।
काशीत्यागः कृतो नूनं त्वया दुष्पथगामिना ॥ 483

वेदविस्मरणे जाते वेदार्थे विस्मृते ततः ।
वेदार्थस्याननुष्ठाने प्रयाति नरकं द्विजाः ॥ 484

जाबालप्रमुखैर्वेदैः (वेदश्रुतिपुराणेषु)
या काशी प्रतिपादिता ।
सा काशीं दुर्लभा प्राप्ता कथं त्यक्ता त्वया द्विज ॥ 485

तत्काशीवासजं सौख्यं द्युसदामपि दुर्लभम् ।
तत्सौख्यं जीवता विप्र कथं त्यक्तं त्वया वद ।। 486

या काशी तपसा प्राप्ता भूयसा शिवसेवया ।
सा काशी मुक्तिदा विप्र सन्त्यक्ता हेलया कथम् ।। 487

यस्यां पातभयं नास्ति यस्यां जन्मभयं तथा ।
सा काशी .... .... ।। 488

यस्यां यमभयं नास्ति महापातकिनामपि ।
सा काशी .... .... ।। 489

यस्यां मृत्युभयं नास्ति मरणासन्नदेहिनाम् ।
सा काशी .... .... ।। 490

यस्यां काश्यां प्रविष्टा ये ते प्रविष्टाः शिवोदरे ।
सा काशी .... .... ।। 491

या काशी संस्मृताप्येनांस्यनिशं नाशयिष्यति ।
सा काशी .... .... ।। 492

या काशी संस्मृताप्याशां विविधां पूरयिष्यति ।
सा काशी मुक्तिदा विप्र सन्त्यक्ता हेलया कथम् ।। 493

या काशी संस्तुता पुण्यैर्विविधैः पूरयिष्यति ।
सा काशी .... .... ।। 494

या काशी सर्ववेदानां स्तुत्या समभवन्मुने (?) ।
(या काशी सर्ववेदोक्तपुण्यकर्मफलप्रदा)
सा काशी .... .... ॥ 495

या काशी शङ्करस्यापि गिरिजेव प्रिया मता ।
सा काशी .... .... ॥ 496

या काशी सर्ववेदानां असीत्पूज्यतमा सदा ।
सा काशी .... .... ॥ 497

या काशी ब्रह्मसाकरं सच्चिदानन्दलक्षणम् ।
सा काशी .... .... ॥ 498

या काशी ब्रह्मविज्ञानं आनन्दं परमं पदम् ।
सा काशी .... .... ॥ 499

या काशी निष्कलं ब्रह्म शिवमद्वयमुच्यते ।
सा काशी .... .... ॥ 500

या काशी पावनी साक्षात्पावनानां च पावनी ।
सां काशी .... .... ॥ 501

या काशी परमं ज्योतिरनाद्यन्ता सनातना ।
सा काशी .... .... ॥ 502

या काशी मोक्ष (मुक्ति) वनिताविलासविलसत्स्थली ।
सा काशी .... .... ॥ 503

या काशी परया भक्त्या सदा सेव्यतमा स्मृता ।
सा काशी .... .... ॥ 504

या काशी गणनाथाद्यैर्गणवृन्दैरुपाश्रिता ।
सा काशी .... .... । 505

या काशी कालकालेन भैरवेण समाश्रिता ।
सा काशी .... .... ॥ 506

या काशी विश्वनाथेन साम्बेन समुपाश्रिता ।
सा काशी .... .... ॥ 507

या काशी विविधैर्देवैर्मूर्तिमद्भिरुपाश्रिता ।
सा काशी .... .... ॥ 508

या काशी विविधैस्तीर्थैर्मूर्तिमद्भिरुपाश्रिता ।
सा काशी .... .... ॥ 509

या काशी विश्वनाथेन स्वात्मवद् दृश्यते सदा ।
सा काशी .... .... ॥ 510

या काशी गिरिजाबन्धोर्विलाससदनं सदा ।
सा काशी .... .... ॥ 511

या काशी भूरिपुण्याब्धिब्रह्मानन्दप्रवर्धिनी ।
सा काशी .... .... ॥ 512

या काशी शङ्कराकारा दुष्प्रापा तपसामपि ।
सा काशी .... .... ॥ 513

या काशी कामधुग्दृष्टा मुक्तिदुग्धप्रदायिनी ।
सा काशी .... .... ॥ 514

या काशी सुरमन्दारो मुक्तिपुष्पफलप्रदः ।
सा काशी .... .... ॥ 515

यस्यां काश्यां स्थिता मर्त्याः नमस्यन्ते दिवौकसैः
(स्वरालयैः) ।
सा काशी .... .... ॥ 516

यस्यां काश्यां स्थिता मर्त्या निवसन्ति निराकुलाः ।
सा काशी .... .... ॥ 517

यस्यां काश्यां स्थिता मर्त्या स्वर्गं नेच्छन्ति तेजसा ।
सा काशी .... .... ॥ 518

यस्यां काश्यां स्थिता मर्त्या धिक्कुर्वन्ति हरेः पदम् ।
सा काशी .... .... ॥ 519

यस्यां काश्यां स्थिता मर्त्या धिक्कुर्वन्ति विधेः पदम् ।
सा काशी मुक्तिदा विप्र सन्त्यक्ता हेलया कथम् ।। 520

यस्यां काश्यां स्थिता मर्त्या न शोचन्ति कदाचन ।
सा काशी मुक्तिदा विप्र सन्त्यक्ता हेलया कथम् ।। 521

ईदृशी परमा काशी येन सन्त्यज्यते भ्रमात् ।
न तेन सदृशः पापी त्रिषु लोकेषु दृश्यते ।। 522

वानरेण यथा रत्नं न परिज्ञायते तथा ।
काशीतत्वं न विज्ञातं नरैः सन्त्यक्तकर्मभिः ।। 523

हीरकं न वराकाणां यथा प्रियकरं तथा ।
काशी मलिनचित्तानां नैव प्रियकरं ध्रुवम् ।। 524

न भाति शुनकस्याग्रे नारिकेलफलं यथा ।
तथा न भाति काशी सा हृदये दुष्कृतात्मनाम् ।
काशी न सुलभा पुंसां वसनासन्नचेतसाम् ।। 525

विहितानेकसंयासां विवृतानेक मानसाम(?) (वर्त्मनाम्) ।
सुलभा यदि काशी स्यात्तदा सर्वेऽपि जन्तवः ।। 526

मुक्ताः पुरत एवैषा काशी न सुलभा ध्रुवम् ।
येन लब्धा न वा काशी स पापी हीनर्निष्कृतिः ।। 527

ग्रेन प्राप्तापि सन्त्यक्ता काशी पापी ततोऽधिकः ।
यथालब्धनिधेः पापी लब्धत्यक्तनिधिर्हतः ।। 528

तथा पापी भवत्येव काशीत्यागी नरो हतः ।
काशीरत्नं परित्यज्य दुर्भगाः पापमूर्तयः ।। 529

यतन्ते काचमन्वेष्टुं अङ्गुल्याभरणाय ते ।
अनन्तोग्रतपोलब्धा काशी पाशुपतस्थली ।। 530

येन त्यक्ता ततोऽप्यन्यो को वा मूर्खतरो भुवि ।
यस्त्यक्तुं यतते मोहात्काशीमानन्दमञ्जरीम् ।। 531

प्रज्ञानफलसञ्छन्नां पुण्यवृत्तसमन्विताम् ।
बहुभिर्जन्मभिः पूर्वमस्माभिस्तु तपः कृतम् ।। 53

तथाप्यस्माभिरद्यापि सा काशी नैव लभ्यते ।
नरकेषु विचित्रेषु बहुधा लुठितं पुरा ।। 533

पुनः पुनश्च तेष्वेव लुठनं भावि भूरिशः ।
कदा परात्परतरः करुणासागरो हरः ।। 534

अस्मासु करुणां दृष्टिं वितरिष्यति सादरम् ।
अनन्तपातकाकारो यः संसारदवानलः ।। 535

स महेशकृपाऽऽसाराद्बिना नैव विनश्यति ।
हा हरामरमन्दार कदा करुणया प्रभो ।। 536

सम्पावयिष्यस्यस्मांस्त्वं काशीं सम्प्रापयिष्यसि ।
अपारकरुणाकारस्त्वं हि भक्तसुरद्रुमः ।
भूरिपुण्यतपोराशिं काशीं विश्राणयाशु नः ।। 537

**जैगीषव्य उवाच -**

इत्युक्तं तद्वचः श्रुत्वा तदा वेदनिधिर्द्विजः ।
हा कशीविश्वनाथेति प्रललाप मुहुर्मुहुः ।। 538

महादेव महादेव काशीतः पुण्यराशितः ।
श्रौतभस्मसमावीतः कथं निष्कासितोऽस्म्यहम् ।। 539

हा काशीश महेशान किं कृतं पातकं मया ।
काशीबहिः पतेदेषा कथं मम तनुः प्रभो ।। 540

प्रायशस्तनुरेषा मे काश्यामेव पतिष्यति ।
मुक्तिर्भविष्यतीत्येषा प्रत्याशा भूयसी मम ।। 541

काश्यां कृताघसङ्घस्य मम श्रीकालभैरवः ।
शास्तिं करिष्यतीत्येषा प्रत्याशा भूयसी मम ।। 542

यातनास्तम्भसम्बन्धः काश्यां मम भविष्यति ।
तत्र नश्यन्त्यघानीति प्रत्याशा भूयसी मम ।। 543

यातनासमये वाहं साक्षाद् द्रक्ष्यामि भैरवम् ।
तेन मुक्तो भवामीति प्रत्याशा भूयसी मम ।। 544

पतनान्ते महादेवः शैवं पञ्चाक्षरं जपम् (मनुम्) ।
मह्यं प्रदास्यतीत्येषा प्रत्याशा भूयसी मम ।। 545

यातनान्ते शिवा स्वीयमुत्तरीयाञ्चलं प्रति ।
प्रचालयिष्यतीत्येषा प्रत्याशा भूयसी मम ।। 546

यातनान्ते महेशाङ्के दुकूलसमलङ्कृते ।
क्षणमात्रं शयामीति (शये क्षण मिवेत्येषा)
प्रत्याशा भूयसी मम ।। 547

यातनान्ते महादेवो विभूतिं मुक्तिदायिनीम् ।
मह्यं प्रदास्यतीत्येषा प्रत्याशा भूयसी मम ।। 548

काशीवियोगसम्भूतदुःखस्यास्य निवारकः ।
न शङ्करादृतेऽन्यस्तु न दृष्टो नापि दृश्यते ।। 549

भूरिपुण्यतपोलब्धा काशी त्यक्ता भवेद्यदि (भवेन्मम) ।
अतः परं पुनः काशी कथं प्राप्या मयाऽधुना ।। 550

ममेदं जीवनं धिग्धिग्धिग्धिक्काशीपराङ्मुखम् ।
काशीवियोगे सम्भूते जीवनेनापि किं मम ।। 551

काशीवियुक्तमेतन्मे शरीरमधुना मम ।
भारायते वृथा यस्माच्छरीरस्यास्य धारणम् ।। 552

वरं दुःखाब्धिसम्बन्धो वरं नरकयातना ।
काशीवियोगो न वरं सत्यं सत्यं न संशयः ।। 553

श्रीमद्विश्वेश्वरं लिङ्गं न दृष्टं यद्दिने मया ।
तद्दिनं जीवनं व्यर्थमनर्थानां च साधनम् ।। 554

श्रीमद्विश्वेश्वरं लिङ्गं यद्दिने नार्चितं मया ।
तद्दिने जीवनं व्यर्थं स जीवन्मृत उच्यते ।। 555

श्रीमद्विश्वेश्वरं लिङ्गं यद्दिने पूजितं मुदा ।
तद्दिनं सुदिनं धन्यं जीवितं च सुजीवितम् ।। 556

काशीवियोगे जातेऽपि पुनर्जीवाम्यहं जडः ।
अतोऽहं दुर्भगो दुष्टः पापिष्ठश्च न संशयः ।। 557

काशीवियुक्तमेतन्मे शरीरं श्वशरीरवत् ।
परित्याज्यं न सन्देहो मलमूत्रादिदूषितम् ।। 558

एवं स्वप्नदशां प्राप्य विलप्य च समुत्थितः ।
मह्यं निवेदयामास स्वप्नवृत्तान्तमादितः ।। 559

ततः परमुवाचेदं स वेदनिधिरादरात् ।
इदं शरीरमधुना त्यक्ष्याम्येव न संशयः ।। 560

आयास्यति कथं कालः कदा काशीशिवात्मिका ।
त्याज्या भविष्यत्यमला तन्न जाने हि सर्वथा ।। 561

अधुनैव शरीरं चेत्काश्यां त्यक्तं मया तदा ।
मुक्तिः प्राप्या भवेदद्य श्रीमहेशकृपावशात् ।। 562

काशीवियोगो यो जातः स्वप्ने तेनापि मेऽधुना ।
बहुदुःखं समुत्पन्नं कम्पते चापि मे तनुः ।। 563

यदि जाग्रदवस्थायां काशीत्यागो भविष्यति ।
तदा भूयांसि दुःखानि भविष्यन्ति न संशयः ।। 564

अतः काश्यां प्रयत्नेन तनुमुद्धूल्य भस्मना ।
बिल्वैरभ्यर्च्य विश्वेशं त्यक्ष्याम्येव तनुं ध्रुवम् ।। 565

भवदादिषु पश्यत्सु शिवनिष्ठेषु सादरम् ।
यदि त्यक्ष्याम्यहं देहं तदा धन्यो भवाम्यहम् ।। 566

काशीत्यागो ममाभूद्यः स्वप्ने तज्जन्यपातकम् ।
नाशयिष्यामि यत्नेन श्रीपञ्चक्रोशयात्रया ।। 567

इत्युक्त्वा सत्वरं विप्रो ज्ञानवाप्यां प्रयत्नतः ।
स्नात्वा जग्राह विधिवत् पञ्चगव्यं समाहितः ।। 568

ततः स्नात्वा विधानेन कृत्वोद्धूलनमादरात् ।
त्रिपुण्ड्रधारणं चक्रे ततो रुद्राक्षधारणम् ।। 569

ततः समर्चयामास ज्ञानेशं यत्नपूर्वकम् ।
ततः समर्चयामास दण्डनायकमादरात् ।। 570

ततः समर्चयामास मोदादीन् गणनायकान् ।।
ततः समर्चयामास ढुण्ढिं सर्वार्थसाधकम् । 571

आनन्दभैरवं नत्वा ततः षण्मुखमेव च ।
ततः समर्चयामास नन्दिकेशं शिवाग्रतः ॥ 572

ततः प्रदक्षिणीकृत्य श्रीमद्विश्वेश्वरालयम् ।
अथान्यानवशिष्टांश्च द्वारपालान्समार्चयत् ॥ 573

ततो नत्वा देहलीयं कृताञ्जलिपुटस्ततः ।
प्रणनाम सुराधीशं श्रीमद्विश्वेश्वरं मुदा ॥ 574

ततो वेदान्तसंवेद्यं ज्योतीरूपमुमापतिम् ।
ध्यात्वा विश्वेश्वरं देवं विश्वेशाभिमुखं स्थितः ॥ 575

ततो विश्वेश्वरं लिङ्गमभिषिच्य शुभोदकैः ।
भस्मना बिल्वपत्रैश्च पूजयामास सादरम् ॥ 576

ततः प्रदक्षिणीकृत्य नत्वा स्तुत्वा च शङ्करम् ।
मुक्तिमण्टपमासाद्य दध्यौ गौरीमनोहरम् ॥ 577

ततो रुद्रजपं कृत्वा पञ्चाक्षरजपं ततः ।
अन्तर्गृहयस्य यात्रां च चकार विधिपूर्वकम् ॥ 578

ततः परं कृतां यात्रां श्रीमद्विश्वेश्वरं मुदा ।
निवेद्य श्रीमहादेवं पुनर्दध्यौ यथाविधि ॥ 579

ततः परं नित्ययात्रां कृत्वा तदनु सादरम् ।
यात्रां निवेदयामास विश्वेशाय यथाविधि ॥ 580

ततो विश्वेश्वरादीनि दृष्ट्वा लिङ्गानि सादरम् ।
पूजयामास यत्नेन बिल्वपत्रफलादिभिः ॥ 581

ततो ददर्श भक्त्यासौ शीघ्रं श्रीकालभैरवम् ।
पूजयामास पुष्पाद्यैर्भैरवं भीमविक्रमम् ॥ 582

ततः पुनः समागम्य श्रीमद्विश्वेश्वरालयम् ।
पूजयामास विश्वेशं बिल्वपत्रैरनेकधा ॥ 583

श्रीमद्विश्वेश्वरं लिङ्गं समालिङ्ग्य प्रणम्य च ।
तुष्टाव रुद्रसूक्तेन रुद्रमन्त्रैस्तथापरैः ॥ 584

पुनः प्रणम्य सम्पूज्य पुनर्नत्वा महेश्वरम् ।
पुनः समर्चयामास बिल्वपत्रैः सहस्रधा ॥ 585

ततः प्रदक्षिणीकृत्य नत्वा विश्वेश्वरं ततः ।
मध्याह्नकाले सम्प्राप्ते मणिकर्णीतटं ययौ ॥ 586

मणिकर्णीजले स्नात्वा कृत्वा चोद्धूलनं ततः ।
त्रिपुण्ड्रधारणं चक्रे ततो रुद्राक्षधारणम् ॥ 587

ततः समर्चयामास मृन्मयं लिङ्गमुत्तमम् ।
ततो जजाप सश्रद्धं शिवपञ्चाक्षरं द्विजाः ॥ 588

ततः प्रदक्षिणीकृत्य प्रणम्य च मुहुर्मुहुः ।
तुष्टाव गिरिजानाथं रुद्रसूक्तैरनेकधा ॥ 589

ततः पञ्चाक्षरं शैवं जपन्नेव सतारकम् ।
स्वप्राणान्विजहौ योगध्यानमार्गमुपाश्रितः ।। 590

ततो दुन्दुभयो नेदुः पुष्पवृष्टिरभूत्तदा ।
ततः प्रसन्नो भगवान् उमाकान्तः कृपानिधिः ।। 591

ततो वेदनिधिं शम्भुः स्वाङ्के संवेश्य सादरम् ।
दत्त्वा विभूतिरुद्राक्षान्पूतात्मानं चकार सः ।। 592

विश्वेशस्तारकं ब्रह्म व्याचष्टे तदनन्तरम् ।
येनासावमृतिर्भूत्वा मोक्षी भवति शाङ्करः ।। 593

अविमुक्तं निषेवेत यस्माद्यत्नैर्द्विजोत्तमैः ।
अविमुक्तं न मोक्तव्यं न मोक्तव्यं कदाचन ।। 594

व्याचष्टे तारकं ब्रह्म यदा विश्वेश्वरः स्वयम् ।
तदा विष्णुमुखा देवाः प्रणेमुस्तं द्विजोत्तमम्
(समाजग्मुः समाहिताः) ।। 595

ततो ददौ महादेवः किरीटं चन्द्रसंयुतम् ।
सशेषाभरणं भव्यं ललाटे लोचनं य(त)था ।। 596

ततः परं महादेवः(वे) सच्चिदानन्दविग्रहः(हे) ।
लीनो वेदनिधिर्विप्रा महेशानुग्रहात्तदा ।। 597

प्राप्तं तेनेदृशं भाग्यं काश्यां मरणमात्रतः ।
ईदृशं भाग्यमन्यत्र(स्य) नास्ति न श्रूयतेऽपि च ।। 598

ईदृशी मुक्तिदा काशी न त्याज्या साधुकर्मभिः ।
नूनं स्वप्नेऽपि न त्याज्या न त्याज्या सर्वथा द्विजैः ।।

काश्यां स्थाव्यमनिशं विश्वेशाराधनोत्सुकैः ।
मर्तव्यं च प्रयत्नेन काश्यामेव मुमुक्षुभिः ।। 600

पुरा केदारमासाद्य दधीचिर्मुनिपुङ्गवः ।
उद्धूलिताङ्गो देवेशं महेशं पूजयंस्थितः ।। 601

तदा ब्रह्मादयो देवास्तं दृष्ट्वा मुनिपुङ्गवम् ।
प्रणम्य दण्डवद्भूमौ पप्रच्छुः प्रीतमानसम् ।। 602

देवा ऊचुः -

मुनिपुङ्गव सर्वाङ्गं भस्मरुद्राक्षभूषणम् ।
सर्वदा प्रीतचित्तेन स्थीयतेऽत्र कथं त्वया ।। 603

फलानि नैव भक्ष्यन्ते शुष्कपर्णान्यपि द्विज ।
न पीयते जलं चात्र तृप्तिर्भवति ते कथम् ।। 604

आहारेण विनैवात्र बहुकालं प्रयत्नतः ।
क्रियते देवदेवस्य महेशस्यार्चनं त्वया ।। 605

शरीरं मानुषं प्राप्य त्यक्ताहारोऽवनीतले ।
न कोऽपि दृश्यतेऽस्माभिर्भवानेको न तादृशः ।। 606

सर्वदा प्रीतहृदयो भुक्तान्न इव तिष्ठसि ।
किं प्रीतिमूलं विप्रेन्द्र तन्नो वद विशेषतः ।। 607

यद्युच्यते तदास्माभिस्सन्त्यक्तामृतमन्वहम् ।
शक्यते स्थातुमत्रैव त्वत्प्रसादान्न संशयः ।। 608

निराहारेण सर्वेऽपि पूजयामो महेश्वरम् ।
तुष्टो भवति गौरीशो निराहारेण पूजनं(नात्) ।। 609

अस्मभ्यमुपकारोऽयं कर्तव्योऽद्य त्वया मुने ।
यतो दीनदयालुस्त्वं रागद्वेषादिवर्जितः ।। 610

इति पृष्टस्तदा देवैर्दधीचिर्मुनिसत्तमः ।
समाप्य नियमं स्वीयं देवानाह विचक्षणः ।। 611

दधीचिः (आह) -

पुरा कैलासशिखरे समासीनं महेश्वरम् ।
नत्वा सम्पूज्य गौरीशं कृताञ्जलिरभाषत
(नन्दी प्राञ्जलिरब्रवीत्) । 612

नन्दी उवाच -

देव देव महादेव सर्वदेवोत्तम प्रभो ।
आहारेण विना तृप्तिः कथं भवति तद्व 613

इति तद्वचनं श्रुत्वा महादेवः कृपानिधिः ।
नन्दिकेशं विलोक्याह सादरं भक्तवत्सलः ॥ 614

शिवः उवाच -

यस्त्वेकम् (योजपेद)न्नपूर्णाया नाम्नामष्टोत्तरं शतम् ।
तदावृत्त्या विनाहारं तृप्तिर्भवति सर्वदा ॥ 615

धनधान्यादिवृद्धिश्च तदावृत्त्या भविष्यति ।
आयुरारोग्यवृद्धिश्च जायते नात्र संशयः ॥ 616

तन्नामानि प्रयत्नेन शुचिर्भूतेन(शुचीभूत्वाथ) सादरम् ।
अन्नपूर्णालये स्थित्वा जपनीयानि भक्तितः ॥ 617

तन्नामावर्तनात्पूर्वमुद्धूल्याङ्गानि भस्मना ।
रुद्राक्षधारणं कृत्वा ध्यातव्या परमेश्वरी ॥ 618

दुकूलपरिवीताङ्गां नानाभरणशोभिताम् ।
स्मितसम्पूर्णवदनां ध्यात्वा कार्यो जपःस्तुतः(सः)(स्तवः) ॥

ओं नमस्तेऽन्नपूर्णायै श्रीरूपिण्यै नमो नमः ।
ओं नमस्तेऽन्नपूर्णायै धीरूपिण्यै नमो नमः ॥ 620

ओं नमस्तेऽन्नपूर्णायै जगद्धात्र्यै नमो नमः ।
ओं नमस्तेऽन्नपूर्णायै विश्वधात्र्यै नमो नमः ।ः 621

ओं नमस्तेऽन्नपूर्णायै विद्याधा(दा)त्र्यै नमो नमः ।
ओं नमस्तेऽन्नपूर्णायै लक्ष्मीधा(दा)त्र्यै नमो नमः ॥ 622

ओं नमस्तेऽन्नपूर्णायै ब्रह्मधात्र्यै नमो नमः ।
ओं नमस्तेऽन्नपूर्णायै देवधात्र्यै नमो नमः ॥ 623

ओं नमस्तेऽन्नपूर्णायै पृथ्वीधात्र्यै नमो नमः ।
ओं नमस्तेऽन्नपूर्णायै शैवधात्र्यै नमो नमः ॥ 624

ओं नमस्तेऽन्नपूर्णायै वनधात्र्यै नमो नमः ।
ओं नमस्तेऽन्नपूर्णायै नदीधात्र्यै नमो नमः ॥ 625

ओं नमस्तेऽन्नपूर्णायै अब्धिधात्र्यै नमो नमः ।
ओं नमस्तेऽन्नपूर्णायै द्वीपधात्र्यै नमो नमः ॥ 626

ओं नमस्तेऽन्नपूर्णायै अन्नधा(दा)त्र्यै नमो नमः ।
एवं स्तुत्वा हृदि ध्यात्वा ब्रह्मविष्ण्वादिदेवताम् ॥ 627

अन्नपूर्णां प्रयत्नेन तपः कार्यं समाहितैः ।
अस्य श्रीअन्नपूर्णाष्टोत्तरशतनाममन्त्रस्य परमात्मा
सदाशिवोऽहं ऋषयः (षिः) अनुष्टुप् छन्दः,
अन्नपूर्णा देवता, स्वधा बीजं, स्वाहा शक्तिः
ह्रीं कीलकम् । सर्वाभीष्टसिद्धिः फल
श्रीअन्नपूर्णाप्रीत्यर्थे जपे विनियोगः ।

ओं अन्नपूर्णादिवा(मा)देवी श्रीमा(श्रीर्मा)पुष्टिःसरस्वती ।
सर्वज्ञा पार्वती दुर्गा शिवानी शिववल्लभा ॥ 628

वेदविद्या महाविद्या विद्याधात्री विशारदा ।
कुमारी युवती बाला लक्ष्मीः श्रीर्भयहारिणी ॥ 629

भवानी विष्णुजननी ब्रह्मादिजननी परा ।
गणेशजननी शक्तिः कुमारजननी शुभा ॥ 630

भाग्याश्रया भगवती भक्ताभीष्टप्रदायिनी ।
भवरोगहरा भव्या सुभ्रूः परममङ्गला ॥ 631

शर्वाणी चञ्चलापाङ्गी(ङ्गा) चारुचन्द्रकलाधरा ।
विशालाक्षी विश्वमाता विश्ववन्द्या विलासिनी ॥ 632

आर्या कल्याणनिलया रुद्राणी कमलासना ।
शुभप्रदा शुभा वार्ता वृत्तपीनपयोधरा ॥ 633

अम्बा संसारमथनी मृजनी सर्वमङ्गला ।
विष्णुसंसेविता शुद्धा ब्रह्मादिसुरसेविता ॥ 634

परमानन्ददा शान्तिः परमानन्दरूपिणी ।
परमानन्दजननी परमान्नप्रदायिनी ॥ 635

परोपकारनिरता परमा भक्तवत्सला ।
पूर्णचन्द्राभवदना पूर्णचन्द्रनिभांशुका ॥ 636

शुभलक्षणसम्पन्ना शुभानन्तगुणार्णवा ।
शुभसौभाग्यनिलया शुभाचाररतप्रिया ।। 637

चण्डिका चण्डमथनी चण्डदर्पनिवारिणी ।
चण्डमार्ताण्डनयना चन्द्राग्निनयना सती ।। 638

पुण्डरीकपुरा पुण्या पुण्यदा पुण्यरूपिणी ।
पुण्यज्ञेया पुण्यवन्द्या पुण्यमूर्तिः पुरातना ।। 639

अनवद्या वेदवेद्या वेदवेदान्तरूपिणी ।
मायातीता सृष्टमाया सृष्टधर्मात्मवन्दिता ।। 640

असृष्टा सङ्गरहिता सृष्टिहेतुः कपर्दिनी ।
वृषारूढा शूलहस्ता स्थितिसंहारकारिणी ।। 641

मन्दस्मिता शुद्धरूपा शुद्धचित्तमुनिस्तुता ।
महाभागपती दक्षा दक्षाध्वरविनाशिनी ।। 642

अपर्णाऽनन्यशरणा भक्ताभीष्टफलप्रदा ।
नित्यसुन्दरसर्वाङ्गी सच्चिदानन्दलक्षणा ।। 643

नाम्नामष्टोत्तरशतमम्बायाः पुण्यकारणम् ।
सर्वसौभाग्यसिध्यर्थं जपनीयं प्रयत्नतः ।। 644

इदं स्वस्त्ययनं धन्यं महापातकनाशनम् ।
सर्वाभीष्टप्रदं पुण्यं नित्यमङ्गलदायकम् ।। 645

इत्थं नामावली तुभ्यं मयाद्य समुदीरिता ।
गोपनीया प्रयत्नेन नाख्येया यस्य कस्यचित् ।। 646

भक्ताय सुविनीताय शुभाचाराय धीमते ।
आख्येया नापि चान्यस्मै नन्दिन् स्वप्नऽपि सर्वथा ।। 647

शुचिर्भूतै(कृतशौचैः)रियं जप्या द्विजैर्नामावली शुभा ।
अन्यथा वैपरीत्येन भविष्यति फलं ध्रुवम् ।। 648

त्वयाप्यत्यन्तयत्नेन कृत्वैवोद्धूलनादिकम् ।
शिवानीनिकटे नित्यं जपनीयं यथाक्रमम् ।। 649

एतन्नामजपं कृत्वा स्तुत्वा च जगदम्बिकाम् ।
कृतशौचेन सततं स्थातव्यं यत्नपूर्वकम् ।। 650

एतन्नामजपासक्तः सततं यः शुचिर्भवेत् ।
स सर्वांल्लभते कामान्नात्र कार्या विचारणा ।। 651

इतीश्वरवचः श्रुत्वा नन्दिकेशो गणाग्रणीः ।
शुचिर्भूत्वाऽथ नामानि जप्त्वा कामानवाप सः ।। 652

स्कन्दोऽप्येतानि नामानि जजाप स्वेष्टसिद्धये ।
शिवादेतानि नामानि स्कन्दः शुश्राव सादरम् ।। 653

स्कन्दादगस्त्यः शुश्राव नामान्येतानि सादरम् ।
श्रुत्वा जजाप नामानि सोऽपि सर्वार्थसिद्धये ।। 654

श्रुतान्यगस्त्यादेतानि मया नामानि सादरम् ।
जप्यन्ते शुचि(शुद्ध) चित्तेन भवानीसन्निधौ सदा ।। 655

आवहन्तीति मन्त्रेण युक्तान्येतानि सादरम् ।
यो जपेत्सततं भक्त्या स कामाँल्लभते ध्रुवम् ।। 656

देवा वैदिकनामानि सर्वाण्येतानि तान्यतः ।
शुचिभूतेन मनसा जपनीयानि सर्वदा ।। 657

आवहन्तीति मन्त्रेण प्रत्येकं च यथा क्रमम् ।
कर्तव्यं तर्पणं चापि तेन मन्त्रेण मूलवत् ।। 658

तदन्वितैस्तु होमोऽपि कर्तव्यश्चैव मूलवत् ।
एतानि दिव्यनामानि श्रुत्वा ध्यात्वापि सन्ततम् ।। 659

स्तुत्वा देवीं च सततं सर्वान्कामानवाप्नुयात् ।
अन्नपूर्णाप्रसादेन नित्यतृप्तो वसाम्यहम् ।। 660

न कदाप्यन्नपानेच्छा जायते मम सर्वदा ।
सन्तुष्टहृदयो नित्यं वासाम्यत्रार्चयन् शिवम् ।। 661

प्रत्यूहाश्च न बाधन्ते भवान्याः पूजनाद् ध्रुवम् ।
यदा यदाभिलषितं यद्यद्भवति मे सुराः ।। 662

तदा तदाभिलषितं तत्तत्सम्प्राप्यते मया ।
तन्नामजपसामर्थ्यात्समर्थोऽहं सदा सुराः ।। 663

पिपासादीनि दुःखानि जितान्येव मया सदा ।
अत एवात्र सततं निराहारेण शङ्करम् ॥ 664

प्रत्यूहमात्ररहितः पूजयित्वा(पूजयन्नि) वसाम्यहम् ।
इति ब्रह्मादयो देवाः श्रुत्वा नामानि तन्मुखात् । 665

तानि जप्त्वा स्थितास्तत्र बहुकालं शिवार्चकाः ।
श्रुतानि तानि नामानि मया विष्णुमुखाद् द्विजाः ॥ 666

श्रुतानि तानि नामानि जप्यन्ते विधिपूर्वकम् ।
निराहारेण सततं मया काश्यां प्रयत्नतः ॥ 667

तन्नामजपसामर्थ्यात्स्थीयते भक्तिपूर्वकम् ।
तन्नामजपसामर्थ्यं भवतां चाधुना द्विजाः ॥ 668

सकल्मषा यतो यूयं काशीं त्यक्तुं समुद्यताः ।
काशीत्यागार्थमुद्युक्ता भवन्तः पापकारिणः । 669

काशीत्यागोद्योगजन्यपापनाशाय सादरम् ।
पञ्चक्रोशं शतं कृत्वा समायान्त्विह सत्वरम् ॥ 670

ततः परं शुचिर्भूता भवन्तोऽपि भविष्यथ ।
(यूयं ततः परं सर्वे पूतात्मानो भविष्यथ)
ततः सुखेन भवतां काशीवासो भविष्यति ॥ 671

शिवः (उवाच) -

इति तद्वचनं श्रुत्वा सन्तुष्टास्ते मुनीश्वराः ।
शनवारं प्रयत्नेन चक्रुः क्षेत्रप्रदक्षिणम् ।। 672

ततस्ते ये जैगीषव्याच्छ्रुत्वा नामानि भक्तितः ।
(जैगीषव्यात्ततः सर्वे श्रुत्वा नामानि भक्तितः)
चक्रुर्नामजपं सर्वे भस्मरुद्राक्षभूषणाः ।। 673

ततः परं स्वस्थचित्ता बभूवुस्ते मुनीश्वराः ।
उपसर्गाश्च ते सर्वे सर्वतः शामिता मया ।। 674

वृक्षाः सपल्लवा जाता मुनिवृन्दनिषेविताः ।
जातानि सर्वकुडणनि सजलानि मनोरमे ।। 675

व्याधयः सर्वतः शान्ताः सर्वेऽपि सुखिनः स्थिताः ।
मदर्चनपरा जाताः सर्वेऽपि स्थिरमानसाः ।। 676

सोढ्वैव बहुधा ह्रीमानुपसर्गान्मुनीश्वराः ।
असङ्ख्याताः स्थिता देवि ते मुक्ताश्च ततः परम् ।। 677

अत्रोपसर्गान्येें सोढ्वा तिष्ठन्ति गतकल्मषाः ।
तेषां मुक्तिर्भवत्येव मङ्गले मदनुग्रहात् ।। 678

काशीयं चञ्चलापाङ्गि सर्वदा सर्वदेहिनाम् ।
भुक्तिमुक्तिप्रदा तस्मात्सर्वे तिष्ठन्ति सर्वदा ।। 679

सर्वदुःखप्रशमनी सर्वसौभाग्यदायिनी ।
काश्यां वासः प्रयत्नेन सेवनीयो मनीषिभिः ।। 680

यस्यां काश्यां महादेवो भाति विश्वेश्वराभिधः ।
तस्यामस्यां शिवे काश्यां दुःखं नास्त्येव सर्वथा ।। 681

सन्त्यत्र बहवः काश्यां मुक्तिमात्रार्थिनो नराः ।
ते मदीयाः शिवेंतेभ्यो मुक्तिं दास्याम्यसंशयम् ।। 682

मुक्तिकान्तां प्रयच्छामि यस्यां काश्यामहं शिवे ।
कर्मणा मनसा वाचा ये काशीवासनिर्भराः ।। 683

तेभ्यो मुक्तिप्रदानार्थं प्रभुश्च प्रतिभूरहम् ।
पश्यैतान् शान्तहृदया शिवे मोक्षार्थमुत्सुकान् ।। 684

एतादृशानां धन्यानां नित्यं मद्भक्तचेतसाम् ।
मुक्तिर्भवति निर्विघ्नं मत्प्रसादाद्वरानने ।। 685

पश्यैनं(तं) जयगीषव्यं मदर्चनपरायणम् ।
मदर्चनार्थमाघ्राति पूजासाधनपूर्वकम् ।। 686

अतिवृद्धोऽयममलो नित्यं कालत्रयेऽपि माम् ।
समर्चयति बिल्वाद्यैः शिवलिङ्गस्वरूपिणम् ।। 687

सर्वदा शिव काशीश महेश मृड शङ्कर ।
विश्वनाथेति नामानि जपत्ययमनाकुलः ।। 688

एतानि पञ्चनामानि मम दिव्यानि शैलजे ।
काश्यामनेकलिङ्गानि स्थापितानि यथाविधि ॥ 689

काश्यां कृतान्यनेनैव लिङ्गदानानि भूरिशः ।
शैवानाहूय विधिवच्छैवेभ्यो भक्तिपूर्वकम् ॥ 690

पार्वती उवाच -

देव देव महादेव लिङ्गदानविधिं वद ।
लिङ्गदानफलं चापि वद मह्यं कृपानिधे ॥ 691

श्रीसदाशिवः (उवाच) -

काश्मीरकाञ्चनादीनि लिङ्गानि विविधान्यपि ।
देयान्यनन्तयत्नेन मत्प्रीत्यर्थं मुमुक्षुभिः ॥ 692

शैवेभ्य एव देयानि सर्वदानानि सर्वदा ।
ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते ॥ 693

अत्यल्पमपि दत्तं यद्यस्मिन्नक्षय्यमम्बिके ।
तादृशः शैव एवातो दानं शैवाय दीयते ॥ 694

शिवरात्रौ सोमवारे ग्रहणे चन्द्रसूर्ययोः ।
सङ्क्रान्तिष्वपि कर्तव्यं लिङ्गदानं मुमुक्षुभिः ॥ 695

उपोष्य पूर्वदिवसे शैवान्सम्पूज्य सादरम् ।
प्रार्थनीयास्तदा शैवा लिङ्गदानार्थमादरात् ॥ 696

ततो लिङ्गानि देयानि क्षीराज्यैर्विधिपूर्वकम् ।
अभिषिच्यार्चनीयानि बिल्वपत्रादिभिः शिवे ॥ 697

सौवर्णे राजते वापि ताम्रे वा भाजने नवे ।
नववस्त्रसमास्तीर्णे शिवलिङ्गं निवेदयेत् ॥ 698

ततः पुनः प्रयत्नेन भस्मबिल्वदलादिभिः ।
सम्पूज्य क्षीरपक्वान्नैर्नैवेद्यानि समर्पयेत् ॥ 699

रात्रौ जागरणं कार्यं भक्तिश्रद्धापुरःसरम् ।
कथा मदीया श्रोतव्या मूर्तिध्यानपुरःसरम् ॥ 700

प्रदक्षिणापि कर्तव्या सपुष्पाञ्जलि शङ्करि ।
नैवेद्यं देयममलं मह्यं यामचतुष्टये ॥ 701

ततः प्रातः समुत्थाय कृत्वा स्नानादिकं ततः ।
शैवानां पूजनं कार्यं मधुपर्कपुरःसरम् ॥ 702

ततः सुवर्णसहितं वस्त्रयुग्मसमन्वितम् ।
ग्राह्यं सपात्रं हस्तेन शिवलिङ्गं मदात्मकम् ॥ 703

ततः परमयं मन्त्रो मन्मूर्तिध्यानपूर्वकम् ।
देशकालादि सङ्कीर्त्य पठनीयो मनीषिभिः ॥ 704

शिवलिङ्गे शिवाकारे भुवनानि चतुर्दश ।
तस्मादस्य प्रदानेन प्रीयतां भगवाञ्छिवः ॥ 705

इति मन्त्रं समुच्चार्य शिवलिङ्गं मदात्मकम् ।
मद्भक्ताय प्रदातव्यं जलदानपुरःसरम् ॥ 706

देवस्य त्वेति राजात्वेत्येति मन्त्रास्ततःपरम् ।
प्रतिगृहीत्वा (प्रतिगृह्य प्र)यत्नेन पठनीया यथाक्रमम् ॥

दक्षिणा तावती देया तृप्तिर्भवति यावता ।
सुवर्णानां सहस्रं वा यद्वा देया स्वशक्तितः ॥ 708

दशदानानि कार्याणि ततः शक्त्यनुसारतः ।
ततः कार्यं कृतं कर्म शिवे सर्वं मदर्पणम् ॥ 709

एवं यः कुरुते भक्त्या लिङ्गदानं यथाविधि ।
स महापापसङ्घेभ्यः सद्य एव प्रमुच्यते ॥ 710

यं यमर्थं समुद्दिश्य लिङ्गदानं करोति यः ।
स तं तमर्थमाप्नोति मत्प्रसादान्मनोरमे ॥ 711

लिङ्गदानसमं दानं नास्ति कुत्रापि शैलजे ।
लिङ्गदानं महादानं सर्वदानोत्तमोत्तमम् ॥ 712

लिङ्गदानं महादानं मदनुग्रहकारणम् ।
यः करोति विधानेन स ममातिप्रियः शिवे ॥ 713

पुरा चक्रपुराधीशो राजा परपुरञ्जयः ।
ब्राह्मणान् शिवतत्वज्ञान्प्रणम्याह कृताञ्जलिः ।। 714

राजोवाच -

धनमस्ति यथेष्टं मे मम दित्सापि जायते ।
कथं द्रव्यव्ययः कार्यो दानपात्रं च कीदृशम् ।। 715

इति तद्वचनं श्रुत्वा धर्मज्ञा वीतमत्सराः ।
धर्मतत्वं विचार्याहुर्द्रव्यलोभपराङ्मुखाः ।। 716

ब्राह्मणा ऊचुः -

बहूनि सन्ति दानानि तेषु सर्वेषु चोत्तमम् ।
लिङ्गदानं परं दानं तत्तु सर्वार्थसाधकम् ।। 717

लिङ्गदानेन भगवान्यथा तुष्यति शङ्करः ।
तथा नान्येन दानेन तुष्टो भवति शङ्करः ।। 718

सर्वकामप्रदं दानं लिङ्गदानमिति श्रुतम् ।
लिङ्गदानं ततः कार्यं विधिवद्यत्नपूर्वकम् ।। 719

तुलादानादिदानानि सर्वाण्यपि नराधिप ।
शिवलिङ्गप्रदानस्य कलां नार्हन्ति षोडशीम् ।। 720

प्राप्तव्यं लिङ्गदानेन धर्माद्यर्थचतुष्टयम् ।
लिङ्गदानसमं दानमत एव न दृश्यते ॥ 721

सुवर्णममितं शुद्ध यस्य दानस्य दक्षिणा ।
तादृशं दानमुत्कृष्टं लिङ्गदानं श्रुतिश्रुतम् ॥ 722

शिवलिङ्गप्रदो वंश्यान्मातृतः पितृतः शतम् ।
गृहीत्वा याति सन्तुष्टः श्रीमहादेवसन्निधिम् ॥ 723

शैवेभ्य एव दातव्य लिङ्गदानं प्रयत्नतः ।
पुरा दानरतैर्भूपैर्लिङ्गदानानि केवलम् ॥ 724

कृतानि बहुधा राजन् शिवसन्निधिकाङ्क्षिभिः ।
लिङ्गदानफलं वक्तुं ब्रह्मणापि न शक्यते ॥ 725

परं तु तत्फलं वक्तुं समर्थः पार्वतीपतिः ।
अतः कुरु नरश्रेष्ठ लिङ्गदानमनुत्तमम् ॥ 726

लिङ्गदानेन सुप्रीतो भविष्यति महेश्वरः ।
इति तद्वचनं श्रुत्वा स राजा विधिपूर्वकम् ॥ 727

चकार लिङ्गदानानि मत्प्रीत्यर्थं सहस्रशः ।
शैवानाहूय तेषां च यावद्द्रव्यमपेक्षितम् ॥ 728

तावद् दत्वा ददौ तेभ्यः शिवलिङ्गानि भूपतिः ।
स वंशकोटिसंयुक्तो मातृतः पितृतो नृपः ॥ 729

मत्सन्निधिमवापान्ते गाणपत्यं च लब्धवान् ।
एतस्यैव प्रसादेन बहूनां भावितात्मनाम् ॥ 730

काशीवासोऽभवत्पूर्वं साक्षान्मुक्तिप्रदायकः ।
पश्य पाशुपतान्वृद्धान् भस्मरुद्राक्षभूषणान् ॥ 731

एते पाशुपताः शुद्धाः काशीं पाशुपतस्थलीम् ।
महापद्यपि घोराढ्यां (घोरायां) न त्यजिष्यन्ति
(नैव त्यक्ष्यन्ति) सुव्रताः ॥ 732

असङ्ख्येया हि ते सर्वे मल्लिङ्गार्चनतत्पराः ।
ममैवाराधनं कृत्वा तिष्ठन्त्यत्र मुमुक्षवः ॥ 733

पश्यैतान्भस्मदिग्धाङ्गान् रुद्राक्षाभरणप्रियान् ।
अनर्घ्यार्घ्यंकरान्धन्यान्मन्नामस्मरणोत्सुकान् ॥ 734

महादेवेति मामुच्चैर्वदतः प्रीतिपूर्वकम् ।
कथमेते समायान्ति पश्य पश्य वरानने ॥ 735

एतदुच्चरितः श्राव्यो महादेवेत्ययं ध्वनिः ।
अमृतामृतभूतो यः शिवे रुचिकरो मम ॥ 736

महादेवेति पीयूषं पिबन्तीव पुनः पुनः ।
पश्य पश्य पुनः प्रीत्या महादेवेति वादिनः ॥ 737

नानादिग्भ्यः समायान्ति पश्य पाशुपतोत्तमान् ।
अर्घ्यहस्तान्महादेवेत्युच्चैरुच्चरतो मुदा ॥ 738

कथं भान्ति शुचिर्भूत्वा (पूतात्मानः कथं भान्ति)
भस्मभासितविग्रहाः ।
सर्वेऽप्येते भस्मफाला मम पारिषदाः शिवे ॥ 739

मदर्चनं विनैतेषामन्यत्कार्यं न दृश्यते ।
एते कालत्रयेऽप्येवमागत्याभ्यर्चयन्ति माम् ॥ 740

शिवे पश्य महाशैवान् मुक्तिमण्टपसंस्थितान् ।
पञ्चाक्षरजपासाक्तान् मल्लिङ्गालोकनोत्सुकान् ॥ 741

रुद्राध्यायजपासक्तान्पश्य शैवान् गिरीन्द्रजे ।
ध्यायन्ति यामजं नित्यं पश्यैतान् शैवपुङ्गवान् ॥ 742

एते नृत्यन्ति शैवेन्द्रा मामभ्यर्च्य यथाविधि ।
साष्टाङ्गं प्रणमन्त्येते शतधा पश्य तान् शिवे ॥ 743

कर्पूरदीपान्धृत्वैते नामानि शुभदानि मे ।
गायन्त्येते गानलोलं विदित्वा मामजं शिवे ॥ 744

सर्वेऽप्येते नित्यतृप्ता नित्यानन्दा निरामयाः ।
ध्यायन्ति सच्चिदानन्दं मामेवैते मुदा सदा ॥ 745

मत्कथाऽऽकर्णनासक्ता निर्वाणपदवाञ्छया ।
तिष्ठन्त्यत्रानिशं देवि मामेव शरणं गताः ॥ 746

पश्य पश्य गणान्देवि भैरवादीन्विलोकय ।
सेवन्ते मामजं नित्यमनन्तविजयान्विताः ॥ 747

सर्वान्सुराधिपान्पश्य मदर्चनपरायणान् ।
पुरात्र कार्तिके मासि चतुर्दश्यां सुराः शिवे ॥ 748

सायङ्काले समागत्य पूजां कृत्वा स्थिता मुदा ।
तदा दधीचिरर्घ्याद्यैर्मामभ्यर्च्य प्रयत्नतः ॥ 749

सत्वरं गन्तुमुद्युक्तः स महार्हमहास्तदा ।
तदातु मुनयः सर्वे बह्वस्तेन सङ्गताः ॥ 750

गन्तुं समुद्यता देवि सम्मर्दोऽभूत्तदा बहु ।
ततः परमृषिगणाः सर्वे सम्पूज्य मां निशि ॥ 751

भक्त्या जागरणं चक्रुः शृण्वन्तो मत्कथां शिवे ।
कार्तिकस्य चतुर्दश्यां बिल्वैश्च कनकाह्वयैः ॥ 752

द्रोणपुष्पैश्च ते पूजां चक्रुर्मम महेश्वरि ।
तिलैः ससर्षपैः शुक्लैश्चक्रुः पूजां मयि प्रिये ॥ 753

कृष्णगोघृतदीपानां मह्यं सार्धं शतत्रयम् ।
दत्तं क्षीरान्नमाज्याक्तं दत्तं मह्यं वरानने ।। 754

धूपदीपौ पुनर्दत्तौ दत्तः पुष्पाञ्जलिस्ततः ।
प्रदक्षिणनमस्कारान्कृत्वा च तदनन्तरम् । 755

रात्रिर्नीता प्रयत्नेन मत्कथाश्रवणादिभिः ।
ततोऽरुणोदये जाते स्नात्वा तीर्थेऽथ भस्मना ।। 756

त्रिपुण्ड्रधारणं कृत्वा कृत्वा रुद्राक्षधारणम् ।
सन्ध्यां समाप्य विश्वेशं समभ्यर्च्य यथाविधि ।। 757

मद्भक्तान्भोजयामासुरन्नैर्नानाविधैः शुभैः ।
यः शुक्लोर्ज-चतुर्दश्यामुपोष्य प्रयतः शिवे ।। 758

मामर्चयति विश्वेशं स मुक्तो भवति ध्रुवम् ।
मल्लिङ्गपूजनं पुण्यं सर्वदा सर्वकामदम् ।। 759

ऊर्जशुक्लचतुर्दश्यां अर्चितं बहुपुण्यदम् ।
कार्तिकस्य चतुर्दश्यां सितायां मां प्रयत्नतः ।। 760

यः पूजयति पुण्यात्मा स मुक्तो नात्र संशयः ।
इदं विश्वेश्वरं लिङ्गं साक्षान्मद्रूपमुत्तमम् ।। 761

को वा नातिप्रयत्नेन समाराधयति प्रिये ।
अस्य लिङ्गस्य माहात्म्यं वेदैर्नज्ञायते शिवे ॥ 762

न विष्णुना ब्रह्मणा वा किं तु तज्ज्ञायते मया ।
माहात्म्यं ज्ञातुमेतस्य वेदैस्तप्तं तपः पुरा ॥ 763

विष्णुनापि तपस्तप्तं ब्रह्मणापि वरानने ।
एते तप्त्वा महाघोरं बहुकालं प्रयत्नतः ॥ 764

ततस्तत्वमविज्ञाय विरतास्तपसः शिवे ।
एतादृशमिदं लिङ्गं सर्ववेदान्तसंस्तुतम् ॥ 765

सुरासुरार्चितं लिङ्गं नानामुनिवरार्चितम् ।
मम लिङ्गमिदं देवि पूजितं भुक्तिमुक्तिदम् ॥ 766

पूजयस्वाद्य यत्नेन नवबिल्वदलादिभिः ।
अभिषेचय मल्लिङ्गं क्षीराद्यैर्भक्तिपूर्वकम् ॥ 767

ततोऽस्य कुरु लिङ्गस्य कर्पूराद्यनुलेपनम् ।
ततो मन्दारकुसुमैर्बिल्वपत्रैश्च कोटिशः ॥ 768

सम्पूज्य कुरु नैवेद्यं सघृतं क्षीरमुत्तमम् ।
कृत्वा प्रदक्षिणादीनि लिङ्गध्यानं कुरुष्व मे ॥ 769

नित्यमेतस्य लिङ्गस्य भक्तिं कुरु मनोरमे ।
दृष्ट्वेदं लिङ्गममलं सर्वेऽप्यभ्यर्चयन्त्यतः ॥ 770

प्रिये त्वमपि यत्नेन कुरु मल्लिङ्गपूजनम् ।
ममापि जायते भक्तिर्मल्लिङ्गाभ्यर्चने शिवे ॥ 771

दृष्ट्वेदं लिङ्गममलं को वा नाभ्यर्चयिष्यति ।
मम प्रियतरं लिङ्गं सर्वदेवस्तुतं प्रिये ॥ 772

इदं लिङ्गं स्वप्रकाशमेतद्ब्रह्मैव केवलम् ।
विभाति सर्वमेतद्यद् दृश्यते सचराचरम् ॥ 773

नेदं विभासयत्यर्को न भासयति चन्द्रमाः ।
न तारका भासयन्ति विद्युतोऽपि कुतोऽनलः ॥ 774

एतादृशमिदं लिङ्गं अविकारं मदात्मकम् ।
द्रष्टव्यमर्चनीयं च ध्यातव्यं च प्रयत्नतः ॥ 775

सर्वोऽपि पुण्यकालोऽत्र काश्यां मल्लिङ्गपूजने ।
व्यतीपातादयो योगाः भवन्त्यपि वरानने ॥ 776

सादरं प्रतिगृह्णामि मद्भक्तकृतपूजनम् ॥ 777

सूतः (उवाच) -

इति श्रीविश्वनाथस्य श्रुत्वा वचनमम्बिका ।
भक्त्या वैश्वेश्वरं लिङ्गं पूजयामास चेश्वरी ॥ 778

ततस्तस्मिन्महालिङ्गे सर्वदेवशिखामणिः ।
उमया सह सम्प्रीतश्चकार वसतिं शिवः ॥ 779

तदेव लिङ्गमधुना ब्रह्मविष्ण्वादिभिः सुरैः ।
सर्वदा पूज्यते भक्त्या श्रीमहेशगणैरपि ॥ 780

श्रीमद्विश्वेश्वरं लिङ्गमानन्दघनमद्वयम् ।
श्रुतं स्मृतं वा दृष्टं वा भुक्तिमुक्तिप्रदं ध्रुवम् ॥ 781

श्रीमद्विश्वेश्वरं लिङ्गं प्रसङ्गादपि संश्रुतम् ।
चतुर्वर्गप्रदं विप्राः सत्यं सत्यं मयोच्यते ॥ 782

सकलभुवनदेवं देवतासार्वभौमं
विविधनिगमवेद्यं ब्रह्मविष्ण्वादिवन्द्यम् ।
भजत मुहुरनन्तं शम्भुमाद्यन्तशून्यं
शुभदमनिशमीशं सावधानेन विप्राः ॥ 783

पिबत शैवरहस्यरसं भृशं (रसोज्ज्वलं)

शिवरहस्यकथारसमुत्तमम् ।

भजत शङ्करमेव सदा मुदा

लभत(?)मुक्तिमुमापतिसेवया ॥ 784

चन्द्रचूडचरणौ रमणीयौ

मुक्तिबीजकरणौ वरणीयौ ।

भूरिपुण्यगुणवद्गणनीयौ

आदरादहरहः स्मरणीयौ ॥ 785

॥ इति श्रीशिवरहस्ये सप्तमांशे

शिवगौरीसंवादे काशीप्रभावकथनं नाम

एकोनत्रिंशोऽध्यायः ॥

— श्रीसाम्बशिवार्पणमस्तु —

॥ निर्विघ्नमस्तु ॥



